श्रीकृष्णाय नमः ।

श्रीमद्विट्ठलेशप्रभुचरणप्रणीतो

# भक्तिहंसः ।

श्रीमद्रघुनाथप्रणीतया भक्तितरङ्गिण्या श्रीमत्पुरुषोत्तमप्रणीतेन तत्तीर्थेन तैरेव प्रणीतेन स्वतन्त्रेण विवेकेन च सङ्गतः ।



गोस्वामिप्रवर,—

तिलकायितश्रीमद्गोवर्द्धनमहाराजचरणानाञ्च श्रीमद्गोकुलनाथमहाराजचरणानाञ्च

कृपापाङ्गपात्रेण

भट्टश्रीवलभद्रशर्म्म—

कविकाव्यरत्नाकरकविचूडामणिशुद्धाद्वैतभूषणकविरत्नेन

संशोधितः ।



मोहमय्यां

निर्णयसागरे सम्मुद्य

शुद्धाद्वैतसिद्धान्तकार्यालयात्

प्रकाशितः ।

संवत् १९७१, सन १९१५.

मूल्यं १४ कलाः ।

# आभिमुख्यम् ।



## श्रीमदाचार्यचरणाश्च तत्सम्प्रदायश्च ।

.विजयन्तेतमामनुग्रहैकसुग्रहसमग्रस्य परावरप्रपञ्चनिरुपाधिकशेषिणः क्षराक्षरातीतस्य भगवतः श्रीमत्पुरुषोत्तमस्य वदनाधिदेवतावतारा महाप्रभुचरणप्रभृतिप्रकृष्टतमपदपरम्परोपघूयमानपरमानुभावा 'उपासनादिमार्गातिमुग्धमोहनिवारकाः' श्रीमद्वल्लभाचार्यचरणा यदङ्घ्रिसरोरुहसौरभसीकरास्वादव्युदस्तसमस्तरसान्तरवासनाः केपि समधिगतचरमजन्मानो महाभाग्यभाजः श्रीमति सकलोपनिषन्मधुकरीमुखरितपादारविन्दे भगवति व्रजेन्द्रनन्दने समुद्रिच्यमानेन व्यसनात्मकनिशुद्धपुष्टिस्नेहेन समुपनतमपि परम पुमर्थं न प्रेक्षन्ते नाऽभिरोचयन्ते नाऽभिनन्दन्ति च ।

## सम्प्रदायसमर्थनश्च ग्रन्थसङ्गतिश्च ।

विजयन्तेतमाञ्च भगवन्निदेशबद्धादरतया 'भुवि भक्तिप्रचारैककृते स्वान्वयकृता' तेषा स्वरूपतः श्रिया कीर्त्या कान्त्या च सर्वात्मनाऽप्यात्मसन्निभाः प्रभुचरणपदाविष्कृताशेषगुणकर्मोदया द्वितीयास्तनयाः श्रीमन्तो विठ्ठलेशपादा यैः किल निजाविर्भावसमर्थनद्वारा भगवदभिप्रेतमनुरन्धानैः समभिव्यक्तनिषिक्तभक्तिपदार्थप्रतिपादनपरः प्रणिन्ये प्रबन्धो भक्तिहसो नाम ।

## ग्रन्थप्रयोजनम् ।

एष च कलियुहनिनिदान्धकारेण निरालोके लोके विलीने च विवेकेऽनवधारितमार्गमेव साद्रसिकेर्यतः कुतोऽपि प्रवर्त्तितेषु दिव्योदक्षोभदीनेषु जीवेषु कृतानुग्रहैस्तैः कर्मज्ञानोपासनादिषु भक्तित्वाभिमाने तद्विषये च परमकाष्ठाप-

प्रबन्धरत्नेषु चैतेषु श्रीमत्सुबोधिन्यादीनां विविधविषयविशदावदातोपवर्णन-निर्वर्णनीयरामणीयकत्वेऽपि निखिलग्रन्थान्तरोपजीव्यत्वेऽपि कथञ्चिदनति-दौर्लभ्येऽपि च दीर्घतरेण कालेन पाठप्रवचनपरिशीलनविपरिलोपात्तथैव च स्वरूपतोऽपि दुरवगाहत्वदुरूहविशेषत्वादिना सर्वथाऽपि सुदुर्घटं यथाव-दवबोद्धुं तात्पर्य्यमित्यादितः प्रकरणान्वेषणादिकमेव परमं शरणम् । विषया-न्तरमसंस्पृश्य प्रतिपित्सितमेव यथावद्विविच्य प्रतिपादयितुमाबद्धपरिकराणि हि तानि सम्यगेव तदवगमयन्तीति । ततश्च महाप्रबन्धेष्वपि नात्यायासेन प्रवर्त्तितुं प्रगल्भेत मतिरिति ।

तानि पुनरिदानीं दुरुपलभानि सेवाविषयकाणि लब्धुमशक्यान्येव वा भाग्यवैभवेनाऽस्माकम् । किम्बहुना । उद्देशतोऽपि न तान्युदाहर्त्तुं प्रभवामः । भक्तिहंसस्त्वेव केवलः सुलभो योऽयमिदानीमुपह्रियते संस्कृत्याऽस्माभिः । सेवाकौमुदी तु प्रणश्यन्त्येवोपलब्धेति नेयमत्राऽपवादः । यथा चैतत्तथा तद्भूमिकायां स्पष्टम् । ततश्चाऽयमेव प्रकाश्यमानस्तिष्ठतां साम्प्रदायिकेभ्य इति तमिमं प्रकटीकुर्मः ।

## ग्रन्थस्वरूपञ्च तदनुरूपा चेष्टा च ।

एषोऽपि च गूढतमस्य चाऽपूर्वतरस्य चाऽर्थस्य निर्वचनं विदधानः साभि-प्रायसमस्तपदविन्यासश्चेति दुरवबोध एवाऽऽधुनिकैरिति बहुतरं कालमात्मानं व्यापार्य्य भूयसा प्रयासेनोपलब्धाभिः समयोजि व्याख्याभिस्तिसृभिः ।

## व्याख्याश्च तत्प्रणेतारश्च ।

अत्र च प्रथमा भक्तितरङ्गिणी या किल श्रीमत्प्रभुचरणानां पञ्चमैरात्मजैः श्रीमद्रघुनाथचरणैः प्राणायि । अन्ये च तद्व्याख्यानं तीर्थं स्वतन्त्रो विवेकश्च ये च तेषामेव तृतीयतनयानां श्रीमद्बालकृष्णचरणानां वंशे पञ्चमैः श्रीमत्पु-रुषोत्तमचरणैर्व्यरचिपाताम् ।

## व्याख्यानां दौर्लभ्यञ्चौपयिकत्वञ्च ।

एताश्च सुलभा इति नोपलब्धा अस्माभिः । किन्तु कृताभिमुख्या श्रीमदाचार्य्यचरणानां कृपादृष्टिरिति । यादृशः किल वस्तुतो भक्तिपदार्थस्तस्येदानीं तत्प्रसादादेव सिद्धिश्चाऽवगमश्चाऽपीति ।

यदाहुः प्रबन्धस्याऽस्य प्रथमेन मङ्गलश्लोकेन श्रीमत्प्रभुचरणाः—

"जयन्ति पितृपादाब्जरेणवो यत्प्रसादतः ।
भक्तिः प्राप्ता तदन्याध्वमोहाभावश्च पण्डितैः ॥" इति ।

तथा च विवेकः—

"प्रसादः पाण्डित्येऽपि हेतुः ॥" इति ।

सम्यगेव चाऽवबोधयन्त्येता एनम् । यदि तु नैता आसत्स्यन्त प्रबन्धतोऽस्मान्नाऽलप्स्यतैव किमपि फलम् । व्याख्यानैरपेक्ष्ये हि मन्दधियामाधुनिकानां तात्पर्य्यावबुभुत्सायाः प्रयासमात्रेऽन्यथा प्रतिपत्तावपि वा पर्य्यवसानस्य सांसिद्धिकत्वात् । अथ कथमपि साम्प्रदायिकसंस्कारवशात्तदाशयलेशोपलम्भेऽपि सर्वांशतो यथावद्विविच्याऽनवगमेन प्रसादानुदयात् ।

एवञ्च योऽयमधिगमोऽस्माभिरेतासां यदपि चेदं सम्यक्संशोध्य मूलेन संयोज्य विस्पष्टतमैर्वर्णैः सम्मुद्र्य प्रविभक्तपदवाक्यप्रमाणावतरणप्रतीकाना सर्वतः सौलभ्यसम्पादनमुभयत्राऽपि तदनुग्रह एव निदानमिति नैतदविस्पष्टम् ।

## संशोधनप्रक्रिया ।

अधिगमे चाऽऽसां यथाऽन्वभूयताऽस्माभिरायासः परमः संशोधनेऽपि ततो भूयिष्ठ एवाऽधिगतः सोयम् । अन्यतमाया अपि व्याख्याया यस्मिन् कस्मिन्नपि वा पुस्तके कस्याश्चिदपि पङ्क्तेः सुविशुद्धाया अनुपलम्भे तिमिरमिव

किमपि सर्वतो विजृम्भमाणं व्यमोहयत्प्रज्ञामस्माकमिति । न चाऽपि सर्वत्राऽविशुद्धिमात्रमेव पङ्क्तीनां किन्तु पत्रपत्रार्द्धपरिसमाप्यानां प्रबन्धांशानामपि यत्र तत्राऽनधिगमः । तथा सति कथमिव तत्र व्यापारयत्वात्मानं तपस्विनी प्रज्ञेत्यहो प्रतिबन्धप्रचुराण्यभिप्रेतानि ।

एवमपि श्रीमदाचार्य्यचरणप्रसादसुधारसेन समुज्जीवितोत्साहा न न्यवर्त्तयाम व्यवसायतोऽस्मादात्मानम् । समशोधयामैव च प्रतिपुस्तकेभ्यस्तेभ्यस्तेभ्यस्तानि तान्यक्षराण्युद्धृत्य पत्रान्तरे च विनिवेश्य फलितमेव पाठं विवक्षितानुगुण्ये यथार्थमवधार्य्य । एकत्र यान्ययथार्थानि तान्येवाऽन्यत्र यथार्थानि तत्र च यान्ययथाभूतानि तान्येवाऽपरत्र समुचितान्यक्षराणीति ।

ततश्च प्रकारभेदेऽपि नेदमात्मकल्पितं किन्तु यथापुस्तकमेव संशोधनमिति स्फुटमेतत्तद्विदाम् । तत एव चाऽधस्तादुपन्यसनीयत्वेऽप्युपेक्षिताः पाठभेदाः । व्यर्थतराणां बहुत्वेन वस्तुभूतस्य चैकत्वेन तैरेव पत्राणां परिपूर्त्तेः । अनौपयिकाश्च ते ।

यत्र पुनस्तत्र तत्र पाठस्याऽविशुद्धत्वेऽपि चाऽनौचित्येऽपि च दैवात्कचिदुपगतो विशुद्धश्च समुचितश्च पाठस्तत्र स एव स्वीकृतो निवेशिताश्चाऽन्येऽधस्तात् ।

यत्र तु विशुद्धो वाऽविशुद्धो वा समुचितो वा विपरीतो वा यः कश्चनाऽपि नाऽधिगतस्तत्र प्रतिपाद्यानुरोधेन प्रतिभातः सोऽयमङ्गीकृतः । विवृतश्चैतत्पाठभेदेषु । इदञ्च वर्णमात्रानुस्वारविसर्गाव्यतिरेकेणेति द्रष्टव्यम् ।

क्वचिच्च सर्वत्राऽविशुद्धपाठोपलब्धावप्यनुष्ठितमेवम् । क्वचिच्च यथाधिगममेव पाठमवस्थाप्य स्फुटीकृतस्तेनाऽपरितोषः सहेतुकः पाठान्तरेषु ।

मूले भक्तितरङ्गिण्यां च व्याख्यानुरोधेनैव यावच्छक्यमभ्युपेतः पाठभेदो न पुनः स्फूर्त्त्यनुरोधेनैव । एतदपि च यथा तथा तत्र तत्र निवेदितमधस्तात् ।

यत्र पुनरशुद्धिदर्शनेऽपि न विशुद्धपाठस्फूर्तिरशुद्ध्यनवधारणेऽपि वा तात्पर्य्यानवगमेन भ्रान्ता मतिस्तत्र सन्देहचिह्नमेव विन्यस्तं न साहसमाश्रितम् । उदाहृताश्च ततस्ताः पाठभेदाष्टिप्पण्याम् ।

तदेतदखिलमपि संशोधनसरणिमवेक्षितुकामैः पाठभेदेषु चक्षुषी विनिक्षेपे सुगममित्यलमत्र तदुदाहरणायासेन ।

न चैवमशुद्धिभूयस्त्वमेव केवलं प्रयासातिशये हेतुः किन्तु सर्वत्राऽपि विरामचिह्नानामन्यथाभावोऽपि । समुल्लासन्ते हि समुद्रितकश्यामलिमचाकचक्या शुभ्रतरेषु पत्रेष्वन्तराऽन्तरा विन्यस्ताभिरारक्तरेखाभिर्वर्णावलय इमन भिन्नमूर्धयैर्लेखकैः प्रबन्धविप्लवानपेक्षमेव यत्र क्वचन तान्येतानि प्रायोजिषत । ततश्च समपेक्षितानि दुरुपलम्भान्यनपेक्षितानि च सर्वत्र सुलभानीति मुधास्येव मतिरिति । यथावत्प्रयुक्तैर्वै हि तेषां सुखेन शक्यः समवबोद्धुं ग्रन्थः । विपर्य्यये पुनरनवस्थिता नैयमास्पदमनायासमासादयतीति ।

तदेवं क्लेशातिशयकलङ्कपङ्कया निरन्तरमाकृष्यमाणाना वैयग्र्यस्य सम्भवात्परिशोधने क्वचिदालक्षितं स्खलितं नाऽत्यद्भुतमिति मर्षयेयुर्निसर्गसरलहृदयाः साम्प्रदायिकमहोदयास्तदेतदिति सुदृढोऽयमस्माकं विश्वासः । मुद्रणसम्भ्रमोऽपि च न किल न प्रमादबहुलः ।

पुस्तकानि च तेषां प्रदातारश्च ।

संशोधने चाऽत्र यान्यासादितानि पुस्तकान्यस्माभिर्येषाञ्च कृतानुग्रहाणामेतानि तद्यथा—

( १ ) भक्तिहंसः । मोहमयीस्थबृहन्मन्दिराधिपतिश्रीमद्गोकुलनाथगोस्वामिचरणमहोदयानाम् ।

(२) ,, तेषामेव ।

(३) ,, भुवनविदितवैदुष्यावदानानां श्रीमल्लाल्लभट्टमहानुभावानां यः किल तत्कुल एव समुद्वाहितयाऽस्माकमनुजया श्रीमत्या यमुनया वितीर्णः ।

(१) भक्तितरङ्गिणी । (क) श्रीमद्भारतमार्त्तण्डानां पुस्तकालयस्था ।

(२) ,, (ख) श्रीमद्गोकुलनाथगोस्वामिचरणमहोदयानाम् ।

(३) ,, (ग) श्रीमद्भारतमार्त्तण्डानां पुस्तकालयस्था ।

(४) ,, (घ) पण्डितप्रवरभट्टश्रीगोवर्द्धनशर्म्ममहोदयानां ये किलाऽस्माकं पितृव्यपादाः ।

(१) तीर्थम् । (क) श्रीमत्पितृव्यपादानाम् ।

(२) ,, (ख) गोस्वामिप्रवरश्रीमन्नृसिंहलालजीमहाराजात्मजश्रीमद्गोवर्द्धनाचार्य्याणां यत्किल तदाश्रितैः प्रियसुहृत्प्रवरैः श्रीकल्याणजी शास्त्रिमहाभागैः प्रवितीर्णम् ।

(१) विवेकः (क) श्रीमद्भारतमार्त्तण्डपुस्तकालयस्थः ।

(२) ,, (ख) यथोक्तः ।

(३) ,, (ग) गोस्वामिप्रवरश्रीमन्नृसिंहलालजीमहाराजात्मजश्रीमद्गोवर्द्धनाचार्य्याणाम् । श्रीकल्याणजीशास्त्रिद्वारैव चोपलब्धः ।

## प्रासङ्गिकम् ।

एतानि च द्वित्रेभ्योऽन्यत्र निखिलान्यपि पुस्तकानि सप्तदशशतकस्याऽन्ते वाऽष्टादशशतकस्याऽऽदौ वा लिखितानीत्यवगम्यते । परिणतानि पत्राणि विरलच्छाया च मषीति । संवत्सरलेखस्तु प्रायो नास्त्येव क्वापि ।

## अभिमतार्थसिद्धिश्च तदाशासनञ्च ।

तदेवमायासशतमनुभूय समयातिपातमविगणय्य चिरमुत्सुकानां सुहृदां विलम्बासहनविक्षोभमनवधार्य्य सर्वाङ्गमनोहरोऽयं यथा स्यात्तथैव प्रयतमानैस्तत्रापि च श्रीमदाचार्य्यचरणपादारविन्दानुध्यानमात्रमेव वलमात्मनोऽवबुध्यमानैर्यथाशक्ति मनोरथानुरूपमेव संस्कृत्य प्रकटितः सम्प्रति भक्तिहंसोऽयमस्माभिः ।

एष च साम्प्रदायिकैः पठनपाठनादिप्रचारमात्मनः समधिगम्य यथावदवबोधयन्भक्तिपदार्थं प्रसादयतु तदीयानां चेतांसि निरस्यतु च कालबलेन मार्गान्तरैस्तद्व्यामोहं प्रतिक्षिपतु च तैस्तैरनधिकाराद्विशुद्धभक्तिस्वरूपमवगन्तुमनीशानैः कृतानाक्षेपानित्याशास्महे ।

## प्रमेयम् ।

प्रतिपाद्यं पुनरत्र परमकाष्ठापन्नस्य भगवत आत्मीयत्वेन तदङ्गीकारातिरिक्तसमस्तसाधनाप्राप्यत्वश्रुत्या तदनुग्रहैकलभ्यभक्तिमात्रोपलम्यत्वम् । तत एव मन्त्रोपासनप्रभृतिविधिभिः स्वर्गादिवत्फलत्वेनाऽसम्बन्धः । सर्वदा सिद्धस्वरूपत्वाच्च यागादिवन्न विधेयत्वेन सम्बन्धः । भगवद्भजनमन्त्रोपासनयोः सर्वाधिकारकत्वतद्विरहाभ्यामुद्देश्यत्वेनाऽपि विभूतिरूपेण सम्बन्धात्साक्षात्तदभावः । मूलरूपस्य निखिलानर्थप्रत्यनीकत्वेन सर्वत्राऽपि ब्राह्मणाभिवन्दनीयत्वेन मन्त्राद्यनधीनत्वेन विभूतिरूपस्य च तद्विपर्य्ययेण महतो वैलक्षण्यात्तदुपास्त्योः स्फुटतरो भेदः । नित्यकाम्याग्निहोत्रन्यायेन फलभेदनिबन्धनास्वरूपभेदात् साधनत्वोक्तेः भगवत्स्वरूपातिरिक्तफलकत्वाच्च मन्त्रादेर्भगवदी-

यत्वेऽपि तत्सम्बन्धिन्याः पूजाया भक्तित्वाभावः । मन्त्रजपादेरपि च साधनत्वोक्त्यैव न भक्तित्वम् । तेन च, कर्माङ्गतयाऽनुष्ठितविष्णुस्मरणादेर्भक्तित्वापत्त्या च, ज्ञानकर्मोपासनादीनां तत्तत्फलकारणीभूतानां भक्तेः सकाशाद्भेदस्य नाप्राप्तत्वाद्विभूतिपरत्वन्यूनत्वजघन्यत्वसिद्ध्या च, मार्गभेदेन श्रवणादीनामनेकविधत्वेन च, मन्त्रादेर्भगवदीयत्वेऽपि वा नवविधभक्तावर्चनस्योक्तावपि वा पूजायां भक्तिपदप्रयोग औपचारिकः । भक्तिपदशक्तिश्च स्नेह एव । स्नेहवशेन क्रियमाणानां श्रवणादीनां स्नेहमध्यपातित्वेन गङ्गाप्रवाहान्तःपातिवाह्योदकवद्वा प्रवृत्तिनिमित्तभेदेन वा भक्तित्वम् । ततश्च कर्मणि विधिवत्स्नेहस्यैव भक्तिमार्गे भजनप्रकारनियामकत्वं स्नेहवताम् । अन्येषा च स्नेहवद्भिरुपदिष्टः प्रकार एव नियामकः । पित्रादिशिक्षयाऽविधिज्ञबालकृतसन्ध्यावन्दनादेः कर्मत्ववत्तदुपदेशानुसारेण तत्कृतेर्भक्तित्वस्य तन्मार्गसिद्धत्वात् । आधुनिकानां चोपदेष्टॄणां स्नेहरहितत्वेऽपि मूलाचार्य्याणा स्नेहशालित्वभगवदनुगृहीतत्वाभ्यां तदनुग्रहेण नाऽनुपपत्तिः काचित् । अशक्यविधानत्वाच्च प्रेम्णः प्रकाराणामविहितत्वेन तन्नियामकत्वं युक्तम् । श्रवणादिषु पुनर्योग्यत्वाद्विधिः । ततश्च सर्वमपि समञ्जसमिति ।

## तत्सङ्ग्रहः ।

एतदेव च विचार्य्य वक्ष्यमाणमभिरूपपरिषत्परिगृहीतस्य समासव्यासविधेरनुपरोधमभीप्सन्तो ग्रन्थादौ मङ्गलान्तरेण सङ्गृह्णुः श्रीमत्प्रभुचरणाः—

"मन्त्रोपासनवैदिकताऩ्त्रिकदीक्षार्चनादिविधिभिर्यः ।
अस्पृष्टो रमते निजभक्तेषु स मेऽस्तु सर्वस्वम् ॥" इति ।

## प्रबन्धस्य सर्वाङ्गरमणीयत्वमपूर्वत्वञ्च ।

इदञ्च प्रत्येकमवयवं सर्वांशतो विविच्य मिताक्षरमपि बह्वर्थमविस्तृतमपि विशदं गभीरमपि प्रसन्नमुदात्तमप्युदारं तथा किलाऽत्रोपपादितं येन

सर्वतोऽपि युगपदास्पदीक्रियते केनाऽप्यननुभूतचरेण परितोषेण च प्रसादेन च समुल्लासेन च हृदय जिज्ञासो । अल्पप्रज्ञाना पुनरनवबोध इत्यन्यदेतत् ।

आक्षेप्ताऽपि च तथेह प्रनिक्षिप्तो यथा दुराग्रहग्रहग्रस्ततया तदनभिरोचयमानोऽपि किमपि कथमपि प्रतिवक्तुकामोऽपि न प्रभवति मोचयितुमेकान्तत. सक्तामात्मनस्तालुनो जिह्वाम् । किम्बहुना । स्फुटीकृतञ्चैतद्यदुत चिराय मत्तयभिमानेन मन्त्रोपासनादिभिरेव वञ्चित आत्मा न पुनरद्यतोऽपि सोऽयमबोधि भक्तिपदार्थमिति ।

एतदपि चाऽत्र मङ्गलादिना स्वत एव व्यक्त यत्केनाऽपि नाऽन्येनाऽयमगतस्थिरराताय पन्था किन्तु श्रीमदाचार्य्यचरणैरेव प्रकटीचक्र इति ।

ततश्च दीर्घतरेण कालेन तृषा निर्भिन्नकण्ठस्य सारङ्गशिशो सोय सलिलाभिषेको यत्किल भक्तिपदार्थानवगमेन विमुह्यता भक्तिमार्गीयाणामस्माक प्रबन्धस्याऽस्य सर्वात्मना सस्कृतस्य समुपलम्भ इत्यहो निरवधि प्रमोद ।

## प्रतिपत्तिमोहः ।

बहव किलेदानीमनुपलब्धिवशादनुपासितसाम्प्रदायिकपरिणतप्रज्ञा नेशते तदिदमवत्रोद्धुमस्मादश साम्प्रदायिका यदुत स्नेहात्मकभक्तिसिद्धये श्रवणादिनवकमनुतिष्ठतामस्माक मर्य्यादामार्गीयत्वमेवाऽऽहोस्विद्भक्तिमार्गीयत्व पुष्टिमार्गीयत्व वेति ।

न ताव मर्य्यादामार्गीयत्वम् । भक्तिमार्गीया पुष्टिमार्गीया इत्युभयस्य साम्प्रदायिकव्यवहारस्याऽस्माभिरपलपितुमशक्यत्वात् । न च भक्तिमार्गीयत्वम् । स्नेहाभावात् । ततश्च न पुष्टिमार्गीयत्वमपीति ।

## तन्निरासः ।

तत्राऽय निर्णय प्रतिभाति । प्रबन्धेऽत्र भक्तिपदार्थं निरूपयितु पुरुषोत्तमस्य तदेकोपलभ्यत्व वदन्त श्रीमत्प्रभुचरणा मन्त्रोपासनादिविधिभिस्त-

दसम्बन्धं प्रतिज्ञाय तथाहीत्यादिना यतिष्यत इत्युपपत्तेरित्यन्तेन तत्तत्समस्त-संशयनिरसनपुरस्सरं तमुपपादयन्तो निरपेक्षभक्तियोगफलस्य भगवतः प्राप्ती-च्छया जीवस्य तत्र प्रवृत्तिर्वरणश्रुत्या विहन्येतेत्याशङ्कायां मैवमित्यादिना तद-नुपपत्तेरित्यन्तेन पुरुषोत्तमार्थित्वमेव वरणकृतमिति तेन वरणानुमाने विरोधा-प्रतिसन्धानान्न प्रवृत्तिविघात इति समाधानमभिधाय वरणे चाऽस्तीत्या-दिना सर्वमवदातमित्यन्तेन साधनसापेक्षत्वतन्निरपेक्षत्वाभ्यां यथायथं मर्य्या-दापुष्टिभेदेन वरणद्वैविध्यं व्युत्पादयामासुः । एवञ्च साधनसापेक्षस्य तन्नि-रपेक्षस्य च पुरुषोत्तमार्थित्वं समानम् । तत्राऽऽद्यस्य तत्प्रकारकज्ञानपूर्वकमि-तरस्य तु ततोऽन्यथेत्यन्यदेतत् । ततश्च वरणे चेत्यस्याऽऽभासे व्रजस्थानां वरणकार्य्यपुरुषोत्तमार्थित्वं विनाऽपि स्वतस्तत्सम्बन्धो भक्तितरङ्गिण्यां य उक्तः स तत्प्रकारकज्ञानपूर्वकस्य तस्य तत्राऽभावमभिप्रेत्यैव न तु सामान्याभावा-भिप्रायेणेति ज्ञेयम् । सम्बन्धस्याऽस्य स्नेहात्मकत्वेन तत्सत्त्वे तदर्थित्वं नास्ती-त्युक्तेरसम्भवात् । "दुस्त्यजश्चाऽनुरागोऽस्मिन् सर्वेषां नो व्रजौकसामि" ति "दयित दृश्यतां दिक्षु तावकास्त्वयि धृतासवस्त्वां विचिन्वत" इत्यादेर्विरो-धाच्च । न च नेदं तदर्थित्वं वरणकार्य्यमिति शक्यमभिधातुम् । महतो विप्लु-वात् । अतिप्रसङ्गाच्च । एवं सति तदर्थित्वेन व्रजस्थानां यथा भगवता भाव-वृद्धिर्व्यधायि तथैवाऽस्माकमपि स्वानुगृहीतानां तदर्थितयैव साधनेषु प्रवृत्तानां तामेष विधास्यति । यथा च भाववृद्धिपर्य्यन्तं तदर्थित्वेनैव तेषां पुष्टिमार्गी-यत्वं स्नेहैकफलकत्वाच्च तस्यास्तत एव भक्तिमार्गीयत्वमपि तथैवाऽस्माकमपि साधनप्रवृत्तानामिति तदुभयव्याप्यत्वान्मर्य्यादामार्गस्य तदीयत्वे सत्यपि युक्तोऽयमुभयोऽपि व्यवहार इति । प्रत्यक्षो हि लोके कालिन्दीलोलकल्लोल-लीलारसमनुभवितुमनसस्तत्पथमुपतिष्टमानायां गृहाभिमुखवर्त्तिन्यां वीथौ सञ्चरतोऽपि जनस्य तादृशाभिलापवशेन कालिन्दीं गच्छामीत्यनुव्यवसायो व्यवहारश्च ।

तत एवाऽग्रे किञ्चेत्यादिना तृतीयमार्गप्रवेशो निरूपित इत्यन्तेन भक्त्यति-रिक्तमार्गे तत्सम्बन्धं निरस्य भङ्ग्यन्तरेण पूजाविधौ तत्सम्बन्धशङ्कायामत्र

## श्रीमदाचार्य्यचरणाश्चाऽयं प्रबन्धश्च ।

केचित्पुनः प्रबन्धस्याऽस्य प्रमेये श्रीमदाचार्य्यचरणाशयवैषम्यमाशङ्कन्ते । तदासुरावेशविजृम्भितम् । "उपासनादिमार्गातिमुग्धमोहनिवारकः" "भुवि भक्तिप्रचारैककृते स्वान्वयकृत्" "जयन्ति पितृपादाब्जरेणवः""व्रजामि चरणं मुदा शरणमि" त्यादिभिः श्रीमत्प्रभुचरणैरेव स्वस्य तत्पथपथिकत्वप्रतिपादनात् ।

किञ्च । तत्त्वार्थदीपे सर्वनिर्णयप्रकरणे "कृष्णसेवापरं वीक्ष्ये"ति साधनानि यदन्तस्तत्प्रकाशे श्रीमदाचार्य्यचरणा आहुः—

"सेवा च प्रमाणमूलैव पुरुषार्थपर्य्यवसायिनी । अन्यथा मनस्यन्यद्विधायाऽन्यथा करणे न फलसिद्धिरित्यभिप्रायेणाऽऽह—श्रीभागवततत्त्वज्ञमिति । जिज्ञासुः । न तु कौतुकाद्याविष्टः । भजनं सर्वभावेन । तदा तदुक्तप्रकारेण भगवत्सेवा कर्त्तव्या । स च दुर्लभ इती"ति ।

तथाच सेवा च प्रमाणेत्यादिना यदत्र कथितं तदेव भक्तिहंसे "पूर्वमेवाऽनेकप्रमाणसिद्धत्वादि"त्यादिना सङ्गृहीतम् । जिज्ञासुरित्यादिना भगवत्सेवा कर्त्तव्येत्यन्तेन च यदत्रोक्तं तदेव "तद्रहितानां तु तद्वत्कृत उपदेश एवे"त्यनेन तत्रोपपादितम् । स च दुर्लभ इतीत्यनेन च यदत्र प्रतिपादितं तदेव "आधुनिकानामुपदेष्टॄणां स्नेहाभावेऽपी"त्यादिना विशदीकृतमितिनांऽशतोऽपि वैषम्यमित्यलं विस्तरेण ।

श्रीमल्लाल्भट्टप्रणीतनिर्णयार्णवद्वितीयतरङ्गादिदर्शनेन च विशिष्य दिदृक्षाऽपि तस्य सफलयितुम् ।

## ऐतिहासिकम् ।

श्रीमत्प्रभुचरणादीनां प्रादुर्भावादिसमयस्तु स्फुट एवेति कृतं तद्विचारेण । तथाहि । नयनर्षीन्द्रियचन्द्रसम्मिते वत्सरे ( १५७२ ) श्रीमत्प्रभुचरणानां

प्रादुर्भाव । गजास्यदभ्रनहिमकरगुणाभ्रमातङ्गसङ्गते च काले (१६११) श्रीमद्रघुनाथचरणानामाविर्भाव । विद्यामुनिमहेश्वरैर्विशेष्ये च वर्षे (१७१४) श्रीमत्पुरुषोत्तमचरणाना प्रादुर्भाव इति ।

## आवश्यकम् ।

एव किल यदत्रोपयिकञ्चाऽऽवश्यकञ्च तदिदमखिलमावेदितमस्माभि । इदानी पुन सशोधने च प्रकाशने च तत्पुस्तकप्रदानेन निरुपम साहायक-माहितवद्भ्य प्रशस्तचरितेभ्यस्तेभ्यस्तेभ्यो वितीर्य्य सहस्रशो धन्यवादान् वि-रम्यतेऽस्मात्प्रासङ्गिकादिति शिवम् ।

अधिष्ठानम्—
शुद्धाद्वैतसिद्धान्तकार्य्यालय,
बडा मन्दिर, भूलेश्वर,
बंबई.

प्रश्रयप्रणीताञ्जलिरावेदयिता—
भट्टश्रीनलभद्रशर्म्मा,
कवि, काव्यरत्नाकर, कविचूडामणि,
शुद्धाद्वैतभूषण, कविरत्नश्च,



# विषयानुक्रमः ।



श्रीकृष्णाय नमः ।

श्रीमद्विठ्ठलेशप्रभुचरणप्रणीतो

# भक्तिहंसः ।

श्रीमद्रघुनाथप्रणीतया भक्तितरङ्गिण्या श्रीमत्पुरुषोत्तम-
प्रणीतेन तत्तीर्थेन स्वतन्त्रेण विवेकेन च सङ्गतः ।

---

**जयन्ति पितृपादाब्जरेणवो यत्प्रसादतः ।**
**भक्तिः प्राप्ता तदन्याध्वमोहाभावश्च पण्डितैः ॥ १ ॥**

---

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

यदङ्घ्रिसङ्गिसङ्गेन निःसङ्गाः सङ्गिनोऽङ्गिनः ।
भवन्ति भागिनो भक्तेस्तमीशं विठ्ठलं नुमः ॥ १ ॥
भक्तिभागीरथीतीरे हंसाः कंसारिसारिणः ।
रुवन्ति रुचिरारावा यद्धुतं तदुदीर्यते ॥ २ ॥

अथ कर्मज्ञानोपासनामात्रपराणां तत्तन्मतानुसारिभक्तिपदार्थवादिनां याथार्थ्यमविदुषां मतं निरसिसिषवो भक्तिमतसिद्धं तत्पदार्थं निरूपयन्तः प्रयोजनभेदेन मङ्गलद्वयमाचरन्ति—**जयन्तीति** । ते पितृपादाब्जरेणवो जयन्ति । येषां

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

श्रीविठ्ठलेश्वरं नत्वा रघुनाथं दयापरम् ।
तीर्थं भक्तितरङ्गिण्याः करोति पुरुषोत्तमः ॥ १ ॥

ग्रन्थप्रयोजनं वदन्तो मङ्गलमवतारयन्ति—**अथेति** । **प्रयोजनभेदेने**ति । भक्तिप्राप्तिः प्रथमस्य प्रयोजनम् । तत्र हेतुः श्रीमदाचार्यचरणानां प्रसाद

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

प्रणम्य श्रीविठ्ठलेशचरणाब्जरजांस्यहम् ।
विवेकं भक्तिहंसीयं दर्शये तत्कृपाबलात् ॥ १ ॥

अथ गीतायां "पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यये"ति वाक्ये पुरुषोत्तमस्याऽनन्यभक्तिलभ्यत्वकथनात्तदिच्छूनां भक्तिपदार्थज्ञानस्याऽऽ-

**मन्त्रोपासनवैदिकतान्त्रिकदीक्षार्चनादिविधिभिर्यः ।**
**अस्पृष्टो रमते निजभक्तेषु स मेऽस्तु सर्वस्वम् ॥ २ ॥**

---

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

प्रसादत पण्डितै सदसद्विवेकचतुरैर्भक्ति प्राप्ता ज्ञाता च । किञ्च । ततो भक्तिमार्गादन्ये येऽध्वान प्राप्त्युपाया शुष्ककर्मज्ञानादयस्तेषु यो मोहो वैचित्र्यमिद सम्यगिद वेत्येवविध तदभावस्तद्विषयकभ्रान्त्यभाव । च शब्देन प्राप्ति समुचिता ॥ १ ॥ **मन्त्रोपासनेति** । कर्मकाण्डान्त पातिकामोपाधि-

श्रीमत्पुरुषोत्तमप्रणीत तीर्थम् ।

इति भक्तीच्छुभिस्तत्र परमभक्तिस्तदुक्तिषु विश्वासश्च कर्तव्य इति तेन सूचितम् । मङ्गल तु वस्तुनिर्देशरूपम् । भगवति सर्वस्वत्वबुद्धिर्द्वितीयस्य । अत्राऽप्याशीर्मुखेन तादृशी बुद्धि कार्येति सूच्यते । कर्मज्ञानादय इत्यादिपदेनो-

श्रीमत्पुरुषोत्तमप्रणीतो विवेक ।

यस्यक्तत्वेन लोकप्रसिद्धेभ्य आराध्यत्वज्ञानोपासनाश्रवणादिभ्यो भिन्न भक्तिपदार्थ भक्तिहसग्रन्थेन निर्णिनीषन्तो विवक्षितभक्तेरिदानी श्रीमदाचार्यप्रसादादेव प्राप्तिरिति ज्ञापयितु तादृशमेव मङ्गलमाचरन्ति—**जयन्तीति** । **तदन्याध्वमोहाभाव इति** । तस्या भक्ते सकाशादन्ये येऽध्वान कर्मज्ञानोपासनाद्यास्तेषु यो मोह स्वेष्टसाधनत्वबुद्धिदार्ढ्य तदभाव । एतेन[3] भक्तेरनन्यत्व विवृतम् । इतरसाधननिष्ठाराहित्यपूर्वत्व सदिति । अथवा । प्रसाद पाण्डित्येऽपि हेतु । तेन पूर्वं विचारसामर्थ्यं प्राप्य ततो भक्ता जाता इत्यर्थ । एतेन भगवद्भक्तीच्छुभिस्तत्र भक्तिपूर्वक तदुक्तिषु विश्वसनीयमिति प्राथमिकी कक्षा सूचिता । मङ्गल त्वत्र वस्तुनिर्देशरूपम् ॥ १ ॥ अग्रिमा कक्षामुपदेष्टु प्रस्तुत वादमुपक्षिपन्तो मङ्गलान्तरमाहु—**मन्त्रेति** । मन्त्रोपासन

---

१ तीर्थे गृहीतप्रतीकानुरोधादिह शुष्कपद नास्तीति तन्मत प्रतिभाति । २ कामोपाधिकस्येति ख ग ३ एतेन भक्तितुल्यत्व निवृत्तम् । इतरसाधननिष्ठासाहित्यपूर्वक तदिहीति ख

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

कस्य गायत्र्यादेर्यस्य कस्यचिन्मन्त्रस्य पुरश्चरणपूर्वकं साधनमुपासनमित्युच्यते। वैदिकी दीक्षा सौमिकी। तान्त्रिकी पञ्चरात्राद्यागमोक्ता। अर्चनं द्रव्यादिनाऽन्यद्वारा कारणम्। एतैर्विधिभिरस्पृष्टोऽनधीनो भक्तिमात्राधीनः सन्निजभक्तेषु यो रतिं मन्यते सर्वस्वास्पदीभूतः स एवाऽस्त्वित्यर्थः ॥ २ ॥ ननु किमनेनाऽपूर्वग्रन्थपरिश्रमेण। यतः स्वस्वमते तत्तत्पदार्थानां निर्णीतत्वेन सन्देहाभावा-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम्।

पासनायोगसाङ्ख्यसंग्रहः॥ १ ॥ "यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम्। स वै दुर्ब्राह्मणो ज्ञेय" इति "अदीक्षितस्य वामोरु कृतं सर्वमनर्थकम्" "दीक्षाहीनो नरो मृत" इत्यादिवाक्येषु दीक्षाऽभावे निन्दास्मरणात्तस्याः पृथङ्निर्देश इत्याशयेनाऽऽहुः—**वैदिकीत्यादि**। मूले अर्चनादीत्यादिपदेन जपः संगृह्यते। "परिहाप्या(?)पि वेदांस्त्रीन् कर्माणि विहितानि च। गायत्रीमात्रमाश्रित्य द्विजो भवति निर्भय" इत्यादौ जपादपि भयाभावोक्तेस्तस्याऽप्युक्ततुल्यकक्षत्वात् ॥ २ ॥ **निर्णीतत्वेनेति**। परमफलसाधनतया

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः।

गायत्र्यादेर्यस्य कस्यचिन्मन्त्रस्य पुरश्चरणपूर्वकं साधनम्। वैदिकी दीक्षा सौमिकी। नारायणाष्टाक्षरादिदीक्षा वा। तान्त्रिकी पञ्चरात्राद्यागमोक्ता। अर्चनं स्वयमन्यद्वारा वा प्रतिमादिपूजनम्। आदिपदेन दानादीन्यन्यानि[१]। तेषां विधिभिश्चोदनाभिरस्पृष्टः फलत्वविधेयत्वोद्देश्यत्वैरसंबध्यमानत्वात्तदनधीनः। निजभक्तेषु स्वीयत्वेनाऽङ्गीकृतेषु भक्तेषु रमते तदधीनः सन् क्रीडति। स मे सर्वस्वमस्तु आत्मात्मीयज्ञातिधनरूपोऽस्त्वित्यर्थः। भगवति सर्वस्वत्वबुद्धिर्द्वितीया कक्षा। सा आशीर्मुखेन सूच्यते ॥ २ ॥ अत्र भगवति मन्त्रोपासनाद्यसंब-

१ परिहाप्याऽपीति क. परिहायेति स्यात्। २ शास्त्रादिभिरिति स. ३ कर्मत्वेति स. ४ अस्पृष्ट इति स. ५ सकलपदार्थविषयरूपोऽस्त्वित्यर्थ इति स.

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

दप्रसिद्धसाधनेऽप्रामाण्यादनारम्भ एव श्रेयानिति चेत् । सत्यम् । भवेदेव त्वदुक्तं यदि सन्देहाभावपूर्वकं निर्णयः स्यात् । तदेव नोपलभामहे । तथाहि । "श्रोतव्यो मन्तव्य" इत्यादिवाक्ये श्रवणादीनां विधेयत्वं श्रूयते । यागादिवत् । "श्रवणं कीर्तनं विष्णोरि"त्यादिषु भक्तिरूपत्वञ्च । तथाच भवत्यत्र सन्देहः किमिदं श्रवणं द्विरूपमेकरूपमनुभयरूपं वेति । द्विरूपत्वे अप्रार्थितफलप्राप्तिरधिकारविरोधश्च । एकरूपत्वे उभयत्र विधानवैयर्थ्यात् । तृतीयस्याऽशक्यवचनत्वात् । केचन ज्ञानरूपत्वं तच्छेषत्वं च भक्तेर्निरूपयन्ति । केचन शुद्धस्नेहरूपत्वं स्वतन्त्रफलत्वम् । इत्यनेकप्रकारकसन्देहप्राप्तेस्तत्परिहाराय युक्त एवाऽ

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

निर्णीतत्वेनेत्यर्थः । **अप्रसिद्धसाधन इति** । अप्रसिद्धस्य तत्तद्विष्यसर्शस्य साधन इत्यर्थः । भक्तिरूपत्वश्चेति चकारादविहितत्वम् । "इति पुंसाऽर्पिता विष्णौ भक्तिश्चेन्नवलक्षणा । क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तममि"ति वाक्ये सिद्धार्थानुवादेन विध्यभावात् । **तथाचेति** । विधानाविधानाभ्याम् । **इदमिति** । भक्तिरूपम् । न च श्रुतावात्मपदादत्र च विष्णुपदाद्विषयभेदेन श्रवणभेदात्सन्देहानुदयः शंक्यः । आत्मपदस्य विष्णौ विशिष्य शक्तेः । "दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवानि"ति ज्ञापकात् । "सर्वे वेदा यत्पदमामनन्ति । वेदैश्च सर्वैरहमेव वेद्यः । सर्वत्र प्रसिद्धोपदेशात् । सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषादि"ति श्रुतिस्मृतिन्यायैर्विषयभेदनिरासात् । न च प्रमाणभेदाद्भेदः[१]। अप्रयोजकत्वात् । उक्तवाक्येषु सर्वपदोक्तेः । न च क्रमभेदाद्भेदः शंक्यः । मननादेरितरोपलक्षकत्वस्याऽपि शक्यवचनत्वात् । स्वाध्यायादीनामपि श्रुतौ दर्शनात् । पुराणस्योपबृंहणत्वेन नानाशाखोक्तसाधनसंग्राहकत्वे बाधकाभावाच्चेति । श्रवणादीनां लक्षणमग्रे वाच्यम् । **अशक्यवचनत्वादिति** । "परस्परविरोधे हि न प्रकारान्तरस्थितिरि"ति न्यायात्तथेत्यर्थः । एवं भक्तेर्धर्मविषयकः सन्देहो दर्शितः । स्वरूपविषयकं फलविषयकं च दर्शयितुं मतान्याहुः—**केचनेति** । उपासनाभक्तिवादिनः । **केचनेति** । शुद्धभक्ताः ।

नन्तु किमिदमपूर्वतरमिवोच्यते[1] । सत्यम् । अपूर्वतममपि श्वभ्रकूपपतितभेकसदृशां त्वादृशाम् । न तु विदुषाम् । पूर्वमेवाऽनेकप्रमाणसिद्धत्वात् । तथाहि । “ नाऽयमात्मा प्रवचनेन

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

यमारम्भ इत्यभिसन्धाय साक्षेपं विचारमारभन्ते—**नन्विति** । इदमित्यनेन विध्यस्पर्शो भक्त्यधीनत्वं यदुक्तम् । इवेत्यनेन वास्तवाज्ञानं सूचितम् । तदनुपदं स्वयमेव वक्ष्यन्ति । भूच्छिद्रायिताल्पकूपस्थमण्डूकतुल्यानामनेकप्रमाणसिद्धत्वं दर्शयन्ति—**तथाहीत्यादिना** । “ऋतं च स्वाध्यायप्रवचने चे—” त्यनुवाकोक्तमुख्यतपस्त्वस्य स्वाध्यायप्रवचनयोरेव प्रसिद्धेरादौ तन्निषेधपूर्वक-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

श्रुतौ प्रथमतः प्रवचननिर्देशस्य हेतुं प्रकाशयन्ति—**ऋतमित्यादि** । अस्मिन्ननुवाक एतयोरेवाऽभ्यासादुपसंहारे “तद्धि तपस्तद्धि तप” इति कथनाद्धि यस्माद्धेतोः तत् ते स्वाध्यायप्रवचने तपः तस्मात्ते एवाऽनुष्ठेये इति

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

न्धमसहमानश्चोदयति—**नन्वित्यादि** । इदं विध्यसंबद्धत्वकथनमपूर्वतरम् । मन्त्रशास्त्रे उपासनप्राप्यत्वकथनात् । भगवान् मन्त्रोपासनादिविधिसम्बद्धः । तद्विहितक्रियाफलत्वात् । यद्यद्विहितक्रियाफलं तत्तद्विधिसंबद्धम् । “अग्निहोत्रं जुहुयात्स्वर्गकाम” इत्यादिविहितक्रियाफलभूतस्वर्गादिवदित्याद्यनुमानाच्च संबन्धसिद्धेरप्रामाणिकम्[2] । इवेत्यनेन सिद्धान्तिन आग्रहवादित्वमज्ञानं च सूचयति । तत्र सिद्धान्तं वदिष्यन्तस्तदुक्तमुपगम्य तमेवं[3] तादृशमाहुः—**सत्यमित्यादि** । श्वभ्रं छिद्रम् । तथाच भूच्छिद्रायिताल्पकूपपतितमण्डूकतुल्यानामल्पज्ञानेन कर्णकटु जल्पतां त्वादृशां तथैव न तु बहुज्ञानामित्यर्थः । एवं प्रतिवादिनमाक्षिप्य प्रतिज्ञातस्य प्रमाणसिद्धत्वमुपपादयितुं तान्युपन्यस्य व्याचक्षते—**तथाहीत्यादिना** । **नाऽयमित्यादि** । इयं श्रुतिः कठवल्ल्यां

१ अपूर्वतरतममपीति क्वचित्पाठः । २ इत्याद्यनुमानादसम्बद्धसिद्धेरप्रामाणिकत्वमिति ख. ३ तमेव वादिनमिति क.

लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्य" इति श्रुतौ यमेवेति सामान्योक्त्याऽग्रिमेण च भगवदङ्गीकारमात्रैकलभ्यत्वोक्त्या प्रवचनादिपदान्यात्मीयत्वेन भगवदङ्गीकारातिरिक्तयावत्साधनोपलक्षकाणीति ज्ञायते । तेन जीवकृतिसा-

### श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

मेव साधनलभ्यत्वं निषिध्यते । प्रवचनमध्यापनम् । मेधया धारणशक्त्या । ग्रन्थस्फूर्तिबलेन न बहुपाठेन। वृञ् वरण इति धातो रूपम् । वृणुते स्वीकरोति । यं कञ्चित् । अग्रिमेण तेन लभ्य इति वचनेन । प्रवचनादिपदानि " प्राणभृत उपदधाती "तिवत्सर्वसाधनोपलक्षणतयोक्तानि । **तेनेति** ।

### श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

व्याख्यानान्मुख्यतपस्त्वस्यैतयोरेव प्रसिद्धेरित्यर्थः। **प्राणभृत उपदधातीति वदिति** । यथा "अयं वै पुरो भुवस्तस्य प्राणो भौवायन" इत्येकमन्त्रगतप्राणशब्दमृत्वरूपलिङ्गसादृश्येन तत्सहपठिता मन्त्राः प्राणभृत्त्वेनोपलक्ष्यन्त[1] इति तन्मन्त्रेणोपधेया[2] इष्टका अपि "तद्वानासामुपधानो मन्त्र" इति सूत्रेण प्राणभृत्त्वेन बोधितास्तथाऽत्र प्रवचनादिपदैरपि जीवकृतिसाध्यत्वरूपलिङ्गकानि[3] ऋतादीन्यन्यानि च साधनान्युपलक्ष्यन्त इति तथेत्यर्थः। अत्र यत्फलितं तदाहुर्मूले—**तेनेत्यादिना। तेनेति।** प्रवचनादिपदानां जीवकृतयावत्साधनोपल-

### श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

श्वेताश्वतरोपनिषदि च वर्तते । उभयत्राऽपि ब्रह्मैनोपक्रान्तमित्ययमित्यनेन परम एवाऽऽत्मोच्यते[4]। प्रवचनपदं वेदे रूढम् । तदत्र वाच्यतासंबन्धेन तदुक्तसाधनानि लक्षयति। मेधा धारणावती बुद्धिः । सा च पुरुषनिष्ठस्वाभाविकसाधनानि । श्रुतं चाऽऽगन्तुकानि । तदेतदभिसन्धायाऽऽहुः—**प्रवचनादीत्यादि** । आत्मीयत्वं जीवसंबन्धित्वम् । तस्य विषयितासंबन्धेनाऽङ्गीकारेऽपि सत्त्वात्तद्वारणाय अङ्गीकारातिरिक्तेति । **उपलक्षकाणीति** । उपलक्षकं नाम

---

[1]प्राणेनोपलक्ष्यन्त इति क. [2] तन्मन्त्रेणोपध्येया इति क. [3] प्रवचनान्यन्यानि च साधनान्युपलक्ष्यन्त इति तथेत्यर्थ इति क. [4] आत्मेत्युच्यत इति ख.

ध्यसाधनैरप्राप्यत्वमुक्तं भवति । पूर्वं जीवगतोत्कर्षोऽप्यप्रयोजक इत्यपि। वरणोक्त्या यथा कन्या स्वाभिमतमेव स्वपतित्वेन वृणुते वरो वा तादृशीमेव कन्यां स्वस्त्रीत्वेन तथा भगवान् स्वदासत्वेनाऽऽत्मीयत्वेनाऽङ्गीकरोतीत्युच्यते । तथाच यथा तदनन्तरं नाऽ-

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

भगवत्कृतिसाध्यानुग्रहसाध्यत्वमिति शेषः । यद्यप्यनुग्रहो ज्ञातुमशक्यस्तथापि महापुरुषानुग्रहानुमेयोऽस्तीति ज्ञायते । पूर्वं महदनुग्रहात् । उत्कर्षो महाकुलीनत्वादिः । वरणोक्तेस्तात्पर्य्यं वर्णयन्ति—**यथेति** । तदनन्तरं वरणानन्त-

श्रीमत्पुरुषोत्तमप्रणीतं नीर्थम् ।

क्षकत्वेनेत्यर्थः । एवं फलितार्थकथनेन यत्सिध्यति तदाहुः—**तेनेति** । तथाच फलितकथने अग्रिमग्रन्थविचारेणैतावान्विशेषो बोध्य इत्यर्थः । ननु भगवदिच्छाया इव भगवदनुग्रहस्य सर्वदा ज्ञातुमशक्यत्वान्मूले पूर्वपदेन उत्तरावधिः कोऽभिप्रेयते ? तं वक्तुमाहुः—**यद्यपीत्यादि । इति ज्ञायत इति** । तथा च अयं भगवदनुगृहीतः । महापुरुषानुगृहीतत्वात् । प्रचेतोनलकूबरादिवदिति कार्यलिङ्गकानुमानेन ज्ञायत इत्यर्थः । **पूर्वमित्यादि** । तथाच महदनुग्रहरूपं कार्यमेवोत्तरावधिरित्यर्थः । दृष्टान्ते वृताया उक्तत्वाद्दार्ष्टान्तिके

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

विशेष्यतानवच्छेदकत्वे सति व्यावर्तकम् । यथा "जटाभिस्तापस" इति लोके जटा तापसत्वोपलक्षिका । वेदे च "प्राणभृत उपदधाती"त्यत्र यथा "अयं वै पुरो भुवस्तस्य प्राणो भौवायन" इत्युपधानकरणभूतैकमन्त्रगतप्राणशब्दभृत्त्वरूपलिङ्गसादृश्येन तत्सहपठिता मन्त्राः प्राणभृत्त्वेनोपलक्ष्यन्त इति प्राणभृत्त्वं तत्सहपठितमन्त्रोपलक्षकम् । तथाऽत्र विशेष्यतानवच्छेदकत्वे सति व्यावर्तकेनाऽऽत्मीयत्वेन प्रवचनादिपदैर्जीवनिष्ठानि त्रिविधानि साधनान्युपलक्ष्यन्त इति तानि तथेत्यर्थः । इत आरभ्य इत्युच्यत इत्यन्तेन पदानामर्थो विचारितः ।

१ जटा तापसत्वोपलक्षिकेति क. २ अयं पुरो भुव इति क. ३ प्राणशब्दश्रुत्वलिङ्ग-रूपलिङ्गेति ग. ४ विविधानीति ख.

न्यत्र विनियोगस्तस्यास्तथैतस्याऽपीति ज्ञापितं भवति। पूर्वं केनाऽपि ज्ञातुमशक्यमित्यपि। एवं सति विहितक्रियाफलत्वेन स्वर्गादिवद्भगवति पूर्वोक्तविधिसंबन्धस्तु न शक्यवचनः। स्वकृत्यसा-

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

रमित्यर्थ । **तथैतस्येति**। तस्य भगवतोऽप्यन्यत्र विनियोजकत्वाभाव इत्यर्थ । यथा लौकिकपति स्वभार्यामन्यासक्तिराहित्यपूर्वक स्वासक्तामेव करोति तथाऽत्राऽपीति भाव । **पूर्वमिति**। फलानुमेयमेवेति भाव । **एवमिति**। यथा स्नानदानादिविहितक्रियाकर्तु स्वर्गादिक फल स्वसबद्धमुत्पद्यते न तथा भगवान् कस्यचि कर्मण फलीभूतस्तत्सबद्धो भवतीत्यर्थ । **स्वकृतीति**।

श्रीमत्पुरुषोत्तमप्रणीत तीर्थम्।

यद्यपि जीवो वाच्यो वृत वेन तथापि वरणस्य भगवदधीनत्वात्फलित पदार्थं निष्कृष्य तदर्थमाहु —**एतस्येत्यादि**। **फलानुमेयमिति**। महापुरुषानुग्रहभगवदेकतानतादिरूपफलानुमेयमित्यर्थ । **एवमितीति**। उक्तश्रुतावुपलक्षणविधया जीवकृतसर्वसाधनप्राप्यतानिषेध इत्यर्थ । **स्वसंबद्धमिति**। विधिसबद्धमित्यर्थ । आत्मेति सिद्धनिर्देशविचारेणाऽऽहु —**स्वकृतीति**।

श्रीमत्पुरुषोत्तमप्रणीतो विवेक ।

वाक्यार्थमाहु —**तथाचेत्यादि**। फलितार्थमाहु —**एवं सतीत्यादिना**। **एवं सतीति**। पदार्थे वाक्यार्थे च विचारिते सति। **न शक्यवचन इति**। पूर्वार्द्धविचारात्तथेत्यर्थ । एतेन श्रुतिविरोधान्मन्त्रशास्त्ररूपस्मृतीना तन्मूलका-नुमानस्य चाऽप्रामाण्य सूचितम्। भगवान् मन्त्रोपासनादिनिष्पसबद्ध । वरणातिरिक्तसाधनाप्राप्यत्वेन श्रावितत्वादिति प्रत्यनुमानेन पूर्वोक्तस्य हेत्वाभासत्व च सूचितम्। आत्मपदार्थविचारेणाऽऽहु —**स्वकृतीत्यादि**। नन्वस्तु फलत्वेन विधेयत्वेन चाऽसंबन्ध। परन्तूक्तश्रुतावुद्देश्यतानिषेधकस्याऽभावान्मन्त्रप्रकाश्यत्व-

१ एव सतीत्यादीति क ग २ तन्मूलकाप्रामाण्यमिति ख ३ श्रुतत्वादित्यनुमानेन पूर्वोक्तस्य हेतुत्वाव्याप्यत्व सूचितमिति ख श्रुतत्वादिति प्रत्यनुमानेनेत्यादि ग ४ कर्मत्वेनेति ख

**ध्यत्वाद्यागादिवदपि न तथा। अतः परमिन्द्रादिवदुद्देश्यत्वेन तत्संबन्धोऽवशिष्यते। तत्रापि वदामः। " सर्वस्य वशी सर्वस्ये-**

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

स्वरूपस्य सर्वदा सिद्धत्वान्न यागादिवत्कृतिनिष्पाद्यत्वं तदाधारोत्पाद्याप्य(?)वि-कार्यसंस्कार्यत्वलक्षणं फलकर्मत्वं(?)वा वक्तुं[१] शक्यमित्यर्थः। **अतः परमिति।** पक्षद्वयनिरासानन्तरमित्यर्थः। तदुद्देशेन कर्माचरणलक्षण इत्यर्थः। **तत्रापीति।** यादृशे संबन्ध उच्यमाने न दोषस्तादृशं वदाम इत्यर्थः। सर्वोपास्यत्व-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम्।

**तदाधारेत्यादि।** तदाधारः कृत्याधारः। तथाच घटं करोति ग्रामं गच्छति व्रीहीनवहन्ति व्रीहीन्प्रोक्षतीत्यादिवन्न कृतिफलत्वं फलशालित्वं वा वक्तुं शक्यमिति भावः। श्रुतावुद्देश्यताया अनिषेधान्मन्त्रप्रकाश्यत्वतदधिष्ठातृत्वाभ्यां पूज्यत्वादिना च यस्तत्तद्विधिसंबंधो मूलेऽवशिष्टत्वेनोक्तस्तत्स्वरूपमाहुः—**तदुद्देशेनेत्यादि। तत्रापीति।** श्रवणादिरूपमिलन्तस्य ग्राहकमिदं प्रतीकम्। वदाम इत्येवमुक्तौ बीजमाहुः—**सर्वोपास्येत्यादि**। "सर्वे वेदा यत्पदमामनन्ति। वेदैश्च सर्वैरहमेव वेद्यः। सर्वत्र प्रसिद्धोपदेशात्। सर्ववेदान्तप्रत्ययं चोदनाद्यवि-

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः।

तदधिष्ठातृत्वाभ्यामुद्देश्यतया संबन्धः केन वार्यः। तथाच मन्त्रोपासनादिविधिसंबद्धः। तच्छास्त्रविहितक्रियोद्देश्यत्वात्। तदुद्देश्यः। तच्छास्त्रप्रतिपाद्यत्वात्। तत्प्रतिपाद्यः। तत्प्रधानमन्त्रप्रकाश्यत्वात्। अधिष्ठातृत्वाच्च। शैवशास्त्रप्रतिपाद्यशिववदित्यनुमानमपि तत्र प्रमाणमिति शङ्कायां तत्र कञ्चिद्विशेषं वक्तुं पूर्वं तदुक्तमभ्युपगच्छन्ति—**अतः परमित्यादि**। तर्हि कथमस्पर्श इत्याकाङ्क्षायामाहुः—**तत्रापि वदाम इति**। उद्देश्यत्वेऽपि त्वद्विचारिताद्वैलक्षण्यं

१ प्यविकार्यसंस्कार्यत्वलक्षणकर्मत्वं वेति क. ख. ग. २ न वक्तुमिति घ. ३ इत्यादिवत्कृतिफलत्वं फलशालित्वं वा वक्तुं शक्यमित्यादि क. इत्यादिवन्नेति फलत्वं फलशालित्वं वा न वक्तुं शक्यमित्यादि ख. प्रतिभातं तु निवेशितम्।

शान" इत्यादिश्रुतिभ्यो "देवोऽसुरो मनुष्यो वा यक्षो गन्धर्व एव वा । भजन्मुकुन्दचरणं स्वस्तिमान् स्याद्यथा वयम् । को नु राजन्निन्द्रियवान्मुकुन्दचरणाम्बुजम् । न भजेत्सर्वतोमृत्युरुपास्यममरोत्तमैः । मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिमि"त्यादिस्मृतिभ्यश्च जीवमात्रस्य भगवान् पतिरिति स्त्रियाः स्वपतिभजनवज्जीवमात्रस्य भगवद्भजनमिष्टमिष्टसाधनञ्चेत्यङ्गीकार्यं सर्वथा । तच्च श्रवणादिरूपम् । एवं सति भगवानिव तन्नामादिकपि सर्वान्प्रत्य-

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

लक्षणसम्बन्धस्तु सर्वैरप्यङ्गीकार्य । स च "सर्वस्य वशी सर्वस्येशान" इत्याद्युदाहृतश्रुत्यर्थपर्यालोचनेऽनुग्रह एव पर्यवस्यति । न तेनाऽस्मदनिष्ट किञ्चिदिति भाव । इष्टमिति स्वत पुरुषार्थत्वोक्त्यभिप्रायेणोक्तम् । **एवं सतीति ।**

श्रीमत्पुरुषोत्तमप्रणीत तीर्थम् ।

शेपादि"त्यादिश्रुतिस्मृतिन्यायसिद्धत्वात्सर्वैरङ्गीकार्य । परन्तु तदुपास्य व केन रूपेणेत्याकाङ्क्षाया स सम्बन्ध उक्तश्रुतिविचारे सर्वेश्वरत्वेन सर्वाविशिष्टत्वेन रूपेणेति भानमनुगृहीतानामेव भवतीत्यनुग्रह एव पर्यवस्यति । तथाचा-

श्रीमत्पुरुषोत्तमप्रणीतो विवेक ।

वदाम । तथाच त्वद्विचारितरूपेणाऽस्पर्शो मुस्थ इत्यर्थ । तमुपपादयन्ति— **सर्वस्येत्यादि** । उक्तश्रुतौ सर्वपदाज्जीनमात्रस्य भगवान् पति । स्मृतिषु देवादिपदैरिन्द्रियवपदेन येऽपीत्यादिपदैश्च जीवमात्रस्य भगवद्भजनमिष्टम् । स्वस्तिमान् स्यादित्यादिपदैश्चेष्टसाधनमित्यङ्गीकार्यमित्यर्थ । **तच्चेत्यादि ।** उक्तवाक्योक्त भजन च श्रवणादिरूप न तु मन्त्रोपासनादिरूपमित्यर्थ । तेन सिद्धमाहु —**एवं सतीत्यादिना । एवं सतीति ।** उक्तश्रुतिस्मृतिभि

१ स तु इति ग इत प्राक् "तत्र श्रवणादिरूप भजनमित्यर्थ' इत्यशोऽधिको दृश्यते तत्रैव ।

विशिष्टमिति मन्तव्यम् । मन्त्रशास्त्रे तु निगद्यते राममन्त्रस्तदधिष्ठातृभजनं च कस्यचिन्मित्रं कस्यचिदरिः कस्यचित्सिद्धं कस्यचित्साध्यमित्यादि । एवमेव गोपालादिमन्त्रास्तदधिष्ठातृभजनानि चेति । एवं सति तदधिष्ठातृरूपस्य पुरुषोत्तमत्वे पूर्वोक्तश्रुतिस्मृतिन्यायेन सर्वान्प्रति भजनीयत्वेनाऽविशिष्टं स्यान्न तु तथे-

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

उदाहृतप्रमाणनिचयेन सर्वोपास्यत्वेनाऽविशिष्टस्योपासनासाधनानामप्यविशि-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

ऽनुगृहीतैः स्वस्वानुग्रहानुरूपप्रणाड्या मन्त्रादिभिरुपास्य इति वक्तव्यम् । तत्त्वस्माकमपीष्टमेव । अतस्तद्व्यतिरिक्तरूपेणोद्देश्यत्वनिवारणमुपपादयाम इत्यर्थः । अत्र मूले श्रुत्या सर्वेश्वरत्वमुक्तम् । प्राथमिकस्मृत्या सर्वपदार्थैकदेशभूतान्देवादीन्सङ्गृह्य भगवद्भजनस्य तदिष्टसाधकत्वमुक्तम् । द्वितीयया अनिष्टनिवारकत्वम् । तृतीयया आश्रयस्य तथात्वमुक्तम् । तदर्थो जीवमात्रेत्यादिना संगृहीतः । तच्चेत्यादिना भजनस्वरूपमुक्तम् । एतेषु नवसु स्मरणं "मय्यावेश्य मनो ये मामि"त्युक्तोपासनस्य संग्राहकम् । दास्यमाश्रयस्योपलक्षकं ज्ञेयम् । एवं सतीति प्रतीकं धृत्वा फक्किकार्थमाहुः—**उदाहृतेत्याद्युचितमित्यन्तम्** । तथाच एवं सतीत्यस्य सर्वान् प्रत्यविशिष्टत्वे सतीत्यर्थः । अस्त्वेवं सर्वाविशिष्टत्वं भगवत्तद्भजनयोः । तावता मन्त्रोपासनादिविध्युद्देश्यत्वं केन रूपेण वारितं भवतीत्याकाङ्क्षायां तद् रूपं मूल आहुः—**मन्त्रशास्त्रेत्यादिना । एवं सतीति** । मन्त्रादेर्भजनोपकरणत्वे सति । **अविशि-**

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

सर्वाधिकारकत्वे सिद्धे सति । अस्त्वविशिष्टम् । तावता कथं वादिविचारितोद्देश्यत्वनिवृत्तिरित्याकाङ्क्षायां वैधर्म्यान्निवृत्तिं वक्तुं वैधर्म्यमाहुः—**मन्त्रेत्यादि । चेतीति** । निगद्यत इति पूर्वेणाऽन्वयः । निवृत्तिं व्युत्पादयन्ति—**एवं सतीत्यादिना । एवं सतीति** । त्वद्विचारितरीत्योद्देश्यत्वे सति । **अविशिष्टं**

१ प्रणाममन्त्रादिभिरिति. क. २ अधिकार्थमाहुरिति. क. ३ सर्वाधिकारित्वे इति ख.

त्यन्यथानुपपत्त्यैव तत्पुरुषोत्तमस्य विभूतिरूपं भिन्नमेवेति मन्त-

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

व्यमुचितम् । तथा सति रामगोपालादीनां मन्त्राधीनपुरुषोत्तमत्वे सिद्धसाध्यत्वाद्यङ्गीकार्ये फलप्रासितदभावान्यथानुपपत्त्या । एवं सति सर्वोपास्यत्वहानिः । तथा सति शास्त्रप्रामाण्यानुरोधेनाऽपि विभूतिरूपोपासनमेव कल्प्यम् । तादृशस्य विशिष्टत्वेऽपि सामञ्जस्यमेवेत्यर्थः । यत्र फलतदभावौ सिद्धादिनिबन्धनौ प्रतीयेते

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

**ष्टमिति** । मन्त्राधिष्ठातृरूपमिति शेषः । एवं ग्रन्थं मनसि कृत्वा टीकायामाहुः— **तथा सतीत्यादि** । तथा सति मन्त्राधिष्ठातृत्वे सति । **एवं सतीति** । सिद्धादिभावे सति । **तथा सतीति** । शास्त्रयोर्विरोधे सति । **कल्प्यमिति** । शास्त्रद्वयसामञ्जस्यार्थं कल्प्यम् । तथाच मन्त्रशास्त्रीयविधौ मन्त्राधिष्ठातृतयोद्देश्यत्वेन विभूतेरेव संबन्ध इति तावतैव तेषां भगवत्परत्वं न तु साक्षादिति तत्र मूलरूपेणोद्देश्यत्वं निवारितमित्यर्थः । एवं चाऽत्र भक्तिमार्गीयश्रवणादीनामुपासनामार्गीयश्रवणादीनां चाऽऽपाततः सारूप्येऽपि रूपभेदाद्भेदो बोधितः । यथा ह्यामिक्षाधिकरणे द्रव्यदेवते यागस्य रूपमिति तद्भेदादामिक्षावाजिनयागयोर्भेदस्तथाऽत्र श्रवणादित्रयस्य विषयो रूपं पादसेवनादीनां परिचरणीयादि रूपमिति तद्भेदाद्भेदः । न च नामरूपलीलानां सामान्याद्विषयादिरूपयोर्दैवतयोरभेदः शङ्कनीयः । तत्सामान्येऽपि भेदस्य शास्त्रसिद्धत्वात् । शिवपुराणे संहाररुद्रमाहात्म्यं प्रस्तुत्य "स एष भगवानीशस्तेजोराशिरनामयः । अनादिनिधनो धाता भूतसङ्कोचको विभुः । परमैश्व-

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

**स्यादिति** । मन्त्रो देवता तद्भजनं च तथा स्यात् । **मन्तव्यमिति** ।

१ विशिष्टत्वेऽपीति ख. ग. २ देवतयोर्भेद इति क.

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

तत्र विध्युक्तभजनाभावहेतुकौ न पूर्वोक्तहेतुकौ ताविति भ्रान्त्याकुलितचित्तः

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

यैसंयुक्तः परमेश्वरभावितः । तच्छक्त्याऽधिष्ठितः शश्वत्तच्चिह्नैरपि चिह्नितः । तन्नामनामतद्रूपस्तत्कार्यकरणक्षमः । तत्तुल्यव्यवहारश्च तदाज्ञापरिपालक" इति वाक्यात् । पराशरपुराणेऽपि "माहेश्वरपुराणानी"त्यादिना शैवपुराणानां परमशिवसंहाररुद्रोभयपरत्वमुक्त्वा "वैष्णवानि पुराणानि समस्तानि महामुने । त्रिमूर्तीनां हरेर्नाम्ना मूर्त्या तस्य परं पदम् । प्रवदन्ति पुराणे द्वे ब्राह्मे चैवाऽन्यया दिशे" ति गुणिविष्णुपरमविष्ण्वोर्नामरूपलीलैक्येऽपि भेदकथनात् । महाभारतेऽपि "मूलं कृष्णो ब्रह्म च ब्राह्मणाश्चे"ति । अंशावतरणे कृष्णः केशावतार इति कथनाच्च । श्रीभागवतेऽपि "कृष्णस्तु भगवान् स्वयमि" ति । "ताविमौ वै भगवतो हरेरंशावि"ति कथनाच्च । एवं नामाद्यभेदेऽपि सिद्धे पदार्थभेदे रूपभेदाद्भेदो निर्बाध इति दिक् । **विध्युक्तभजनाभावहेतुकावित्यादि ।** तथाच "मन्त्रो हीनः स्वरतो वर्णतो वे" ति न्यायेन विध्य-

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

तथाच मन्त्रशास्त्रीयविधावुद्देश्यत्वेन विभूतेरेव संबन्धो न तु साक्षाद्भगवत इति त्वद्विचारितरूपेणोद्देश्यत्वे निवृत्ते तथा विध्यस्पर्शः सुस्थ एवेत्यर्थः । एतेन असंबद्धः । अनुद्देश्यत्वात् । अनुद्देश्यः । तच्छास्त्राप्रतिपाद्यत्वात् । अप्रतिपाद्यः । तच्छास्त्रोक्तधर्मरहितत्वात् । तद्विरुद्धधर्मकत्वाच्च । यदेवं तदेवम् । वैष्णवशास्त्रप्रतिपाद्यशिववदिति प्रत्यनुमानं बोधितम् । इदं च श्रुत्यनुगृहीतत्वात्पूर्वोक्तबाधकम् । तथाच भक्तिविरुद्धधर्मकत्वादुपासनाया अपि भक्तिभिन्नत्वं साधितम् । न च 'नामरूपलीलानां सामान्याद्रामादिरूपाणां विभूतित्वाङ्गीकरणमसङ्गतमिति शंक्यम् । तत्सामान्येऽपि भेदस्य शास्त्रसिद्धत्वात् । तथाहि । शिवपुराणे संहारकरुद्रमाहात्म्यं प्रस्तुत्य "स एष भगवानीशस्तेजोरा-

१ तस्य भगवत इति ख. २ विष्णुवदितीति ख.

ध्यम्। ननु विहितप्रकारेण भजनं हि सर्वस्याऽपीत्यदमतो नाऽनुपपत्तिः काचिदिति चेत्। उच्यते। "यानास्थाय नरो राजन्न प्र-

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

शङ्कते—नन्विति। समादधते—यानास्थायेत्यारभ्य न त्वन्यथेत्यन्तेन। अत्राऽयमाशय। यदि गोपालादिमन्त्राणा पुरुषोत्तमाधिष्ठितत्वमेव

श्रीमत्पुरुषोत्तमप्रणीत तीर्थम्।

पराधादेव तत्र फलवैषम्य न तु पुरुषोत्तमाधिष्ठातृकत्वाभावादिति न तेन

श्रीमत्पुरुषोत्तमप्रणीतो विवेक।

शिरनामय.। अनादिनिधनो धाता भूतसकोचको विभु। परमैश्वर्यसयुक्त परमेश्वरभावित। तच्छक्त्याऽधिष्ठित शश्वत्तचिह्नैरपि चिह्नित। तन्नामनामतद्रूपस्तत्कार्यकरणक्षम। तत्तुल्यव्यवहारश्च तदाज्ञापरिपालक"इति। पराशरपुराणेऽपि "माहेश्वरपुराणानी"त्यादिना शैवपुराणाना परमशिवसद्वारुद्रोभयपरत्न व्यवस्थाप्य "वैष्णवानि पुराणानि समस्तानि महामुने। त्रिमूर्तीना हरेर्नाम्ना मूर्त्या तस्य पर पदम्। प्रवदन्ति पुराणे द्वे ब्राह्मे चैवाऽनया दिशे"ति गुणिविष्णुपरमविष्ण्वोर्नामरूपलीलैक्येऽपि भेदबोधनात्। महाभारतेऽपि "मूल कृष्णो ब्रह्म च ब्राह्मणार्थे"ति। अशांवतरणे कृष्ण केशावतार इति कथनाच्च। श्रीभागवतेऽपि "कृष्णस्तु भगवान् स्वयमि"ति। "ताविमौ वै भगवतो हरेरशाविहाऽऽगतानि"ति कथनाच्च। एव चाऽत्र वक्ष्यमाणाना भक्तिमार्गीयाणामुपासनामार्गीयाणा च श्रवणादीनामापातत स्वरूपतौल्येऽपि रूपभेदाद्भेदोऽनुसधेय इति सूचितम्। यथा ह्यामिक्षाधिकरणे द्रव्यदेवते यागस्य रूपमिति तद्भेदादामिक्षावाजिनयागयोर्भेदस्तथाऽत्र श्रवणादित्रयस्य विषयो रूप पादसेवनादीना परिचरणीयादीनि रूपमिति तद्भेदाद्भेद इति। एव च मन्त्रशास्त्रीयमन्त्रप्रकाश्य पुरुषोत्तम। श्रुत्युक्ततन्नामरूपलीलकत्वात्। भक्तिशास्त्रसिद्धपुरुषोत्तमवदिति प्रत्यनुमानस्य विभूतिसाधारण्येन व्यभिचा-

१ तत्कार्यकरणक्षम इति ख २ अशावतारण इति ख ३ नन्वारोऽयं क्वचिदपि नास्ति। प्रतिभातस्तु निवेशित। ४ श्रुत्युक्ततन्नामरूपलीलाकथनादिति ख ५ उभयसाधारण्येनेति ख

माद्येत कर्हिचित् । धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिहे"ति वाक्ये भगवद्धर्मास्थितिमात्रेणैव भगवत्प्राप्त्यर्थमत्यार्त्या नित्यसाधनपरित्यागे शास्त्रगुरूल्लङ्घनेऽपि फलविलम्बः फलाभावो वा न भवतीति निरूप्यते। आस्थितिस्तु कायवाङ्मनसां तदीयत्वम् । एवं सति मन्त्रोपासनाया अपि यदि भगवद्धर्मत्वं स्यात्तदा तत्परत्व-

---

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

न विभूतिपरत्वं तदैतदुपासनमपि साक्षाद्भगवद्भजनव्यपदेशभाग्भवेत् । तथा सति भक्तिमार्गीयभगवद्धर्मपरस्य स्नेहोत्पत्तौ कदाचिन्मार्गबलेनाऽन्यथाचरणेऽपि न नियतकालीनफलसमयातिक्रमो नापि फलाभाव इति यथा मार्गप्रविष्टस्य श्रूयते तथैवोपासनानिष्टस्याऽरिमन्त्रपरस्याऽपि स्यात् । दृश्यते त्वन्यथा । तथा सति शास्त्रसम्प्रदायविरोधः स्यात् । तस्माद्विभूतिपरत्वमेवेति सिद्धम् । कायवाङ्मनसां तदीयत्वं तत्परत्वमित्यर्थः । नन्वत्राऽपि स्नेहोत्पत्तौ सत्याम-न्यथाचरणं न दोषायेति समः समाधिरिति चेत् । न । तादृशस्नेहरूपकार्यस्यैहिकमामुष्मिकं वा किञ्चिद्भक्तिमार्गीयमेव वाच्यं कारणम् । अन्यथा फलश्रवणं विसंवादि भवेत् । अकामितफलप्राप्तिकथनेऽवाञ्छितानिष्टमपि कदाचिद्भवेत् ।

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

रितया हेत्वाभासत्वं बोध्यम् । अत्र चोदयति—**नन्वित्यादि** । तथाच "मन्त्रो हीनः स्वरतो वर्णतो वे"ति न्यायेन साध्योदिस्थले फलविलम्बफलाभावौ विध्यपराधनिबन्धनौ । साध्यस्थलेऽधिकारिणो जघन्यत्वात् । अरिस्थलेऽनधिकाराच्च । न त्विदं वैषम्यम् । पुरुषोत्तमान(?)धिष्ठितत्वात् । अंतस्तत्रापि पुरुषोत्तमस्य साक्षादधिष्ठातृत्वं निर्बाधमिति तद्विष्णुद्देश्यत्वं नाऽस्मद्दीत्याऽपि हीयत इति तदाशयः । यद्यपि सिद्धत्वादीनां कण्ठोक्तत्वेन न्यायापेक्षया प्रबलत्वादाशङ्कैव नोदेति तथापि वादिनो ग्रहिलत्वात्तदनुक्त्वा प्रकारान्तरेणैव समादधते—**उच्यत इत्यादि न त्वन्यथेत्यन्तम्** । तदीयत्वमिति ।

---

१ मन.समाधिरिति घ. २ बाधादिस्थले इति ख. ३ मेवमित्यादि न त्वन्यथेत्यन्तमिति ख.

मात्रेणैव यस्य कस्यचिदिष्टमेव फलं भवेन्न त्वन्यथा। ननु "सर्वेषु वर्णेषु तथाऽऽश्रमेषु नारीषु नानाह्वयजन्मभेषु। दाता फलानाभभिवाञ्छितानां द्रागेव गोपालकमन्त्र एष" इति वाक्यात्सर्वाभीष्टदत्वं गोपालमन्त्रोपासनायामस्तीति नोक्तरूपतेति चेत्। सत्यम्। अस्ति सर्वाभीष्टदत्वम्। नं तूक्तरूपताऽपि। उपासनामार्गीयत्वात्।

---

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

तस्मान्न सर्मः समाधिरिति भावः। यथा पुरुषोत्तमो भक्तिमार्गे सर्वाभीष्टदस्तथा मन्त्राणामपि फलश्रुतेस्तादृगफलप्रदत्वं न पुरुषोत्तमविषयत्वमन्तरेणेत्याशयेनाऽऽह—नन्विति। न तूक्तेति। भजनरूपत्वं नेत्यर्थः। अनारम्याधीतत्वाभावान्न सर्वप्रकृतिरूपपुरुषोत्तमपरत्वं युक्तं पर्णमयीत्ववत्। तत्तत्का-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम्।

पुरुषोत्तमस्योद्देश्यत्वं वारयितु शक्यत इत्यर्थः। इति भाव इति। तथाच भगवद्धर्मेषु विध्यपराधनिषेधादुपासनायाश्च तच्छालित्यान्मूल एव कुठार इति नाऽत्र भगवत उद्देश्यत्व संभावयितु शक्यमत. पूर्वोक्तमदुष्टमिति भावः। मूले सर्वाभीष्टदत्व सर्वेषामभीष्टदातृत्वम्। तथाच मित्रार्यादिभावकथनान्मन्त्राणां विभूतिपरत्वाङ्गीकारोऽप्रयोजक इति सिद्धे भगवद्धर्मत्वे भगवतः साक्षादुद्देश्यत्वमदण्डवारितमित्यर्थः। अत्र समादधते—सत्यमित्यादि। उपासनामार्गीयत्वादिति। तथाच प्रकरणभेदान्न तत्र पुरुषोत्तमस्योद्देश्यत्वमिति भावः। एतद्व्याकुर्वते—नं तूक्तेत्यादिना। पर्णमयीत्ववदिति। यथा

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः।

तत्परत्वम्। तथाचाऽऽस्थाय भगवत्परैः कायवाङ्मनोभिः कृत्वेत्यथः। यस्य कस्यचिदिति। अरिमन्त्रोपासकस्य। तथाच भगवद्धर्मेषु विध्यपराधनिषेधादु-

---

१ न त्वनुक्तरूपताऽपीति क्वचित्। २ मन. समाधिरिति घ ३ भगवद्रूपत्व नेति घ. ४ पर्णमयीवदिति ख. ५ ननूक्तेत्यादिनेति द्वयोरपि पुस्तकयो पाठः। व्याख्येयानुरोधादेवमेव तु युज्यते।

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

"यस्य पर्णमयी जुहूर्भवति न स पापश्लोकश्शृणोती" त्यनारभ्योक्तमपि पर्णमयीत्वं वाक्येन क्रतुसंबन्धितया प्रत्याय्यते तथा । तत्तत्काण्डान्तःपातितत्तत्प्रकरणानां रामतापनीये—"उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पने"ति गोपालतापनीये—"ते होचुरुपासनमेतस्य परमात्मनो गोविन्दस्याऽखिलधारिणो ब्रूही"ति नृसिंहतापनीये मन्त्रोद्धाराद्युपासनालिङ्गानां च तथे-

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

पासनायां तत्सेत्वान्न भगवद्धर्मत्वं शक्यवचनमिति तद्विधौ भगवतः साक्षादुद्देश्यत्वं दूरनिरस्तमिति भावः । न चाऽऽस्थितिस्वरूपविचारे परिपाकदशायां विध्यपराधनिषेधः फलति । न त्वारम्भदशायाम् । तथा सति परिपाकदशायां विध्यपराधो नोद्देश्यत्वं निवर्त्तयिष्यतीति पूर्वोक्तमसांप्रतमिति वाच्यम् । "अपि चेत्सुदुराचार"इति गीतोक्तिविरोधात् । अत्राऽऽरम्भदशाया एव कथनात् । "क्षिप्रं भवति धर्मात्मे"त्यग्रिमवाक्येन तथा निश्चयात् । अतो विध्यपराधेनोपासनायां भगवद्धर्मत्वनिवृत्तिर्युक्तैवेति निश्चयः। एवमुपासनाविध्युद्देश्यत्वे निवारितेऽपि तदर्थमुपासनाविशेषस्य भगवद्धर्मसाम्यमापादयञ्छङ्कते—**ननु सर्वेष्वित्यादि । सर्वाभीष्टदत्वमिति ।** सर्वेषामभीष्टदातृत्वम् । **नोक्तरूपतेति ।** नाऽनिष्टदत्वम् । तथाच गोपालमन्त्रोपासनातिरिक्तोपासनायां मन्त्राणामस्तु विभूतिपरत्वम् । गोपालोपासनायां तु तथात्वाङ्गीकारोऽप्रयोजक इति सिद्धे तदधिष्ठातृत्वे तेन रूपेण पुरुषोत्तमस्य तद्विध्युद्देश्यत्वं तस्या भगवद्धर्मरूपत्वं चाऽदण्डवारितमित्यर्थः । अत्र समादधते—**सत्यमित्यादि । उक्तरूपताऽपीति ।** भगवद्धर्मरूपता । अपिशब्दादनिष्टदत्वाभावः । **उपासनामार्गीयत्वादिति ।** तथाच प्रकरणभेदात्तस्या भगवद्धर्मरूपत्वाभावे तस्यां पुरुषोत्तमस्य न तद-

१ उपासनानामिति क. २ तदभावादिति ख. ३ विघ्नपराध इति क. ४ कर्मणामस्तु इति ख. ५ ज्ञानरूपतेति ख. ६ भक्तिरूपत्वाभावे इति ख. ७ तत्तदधिष्ठातृरूपेणेत्यपि दृश्यते शोधनात्माक्तनोऽनिवारितः पाठः क.

न हि कर्माङ्गत्वेन क्रियमाणस्य भगवत्स्मरणस्य भक्तिरूपत्वं वक्तुं

---

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

ण्डान्तःपातितत्तत्प्रकरणानां स्फुटमुपलम्भात् । न हीति । कर्माङ्गत्वेन कर्मसाद्गुण्यार्थं क्रियमाणस्येत्यर्थः । न ह्यन्योद्देशेन विधीयमानमन्यत्संपादयती-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

त्यर्थ. । प्रकरणभेदेन पुरुषोत्तमपरत्वाभावे दृष्टान्तमाहुर्मूले—न हीत्यादि । टीकायाम्—न हीत्यादि । अतिप्रसङ्गापत्त्या अनुचितमित्यर्थः । तथाच यथा कौण्डपायिनामयने "मासमग्निहोत्रं जुहोती"त्यत्र किं नित्याग्निहोत्रा-नुवादेन मासलक्षणो गुणो विधीयत उत कर्मान्तरं विधीयत इति सन्देहे कर्मण. प्राप्तत्वाद्गुणविधानमिति पूर्व पक्ष· । तस्य (?) तत्र "उपसद्भिश्चरित्वे"ति वाक्यान्तरात्कर्मैक्यपक्षे नित्येऽपि तदापत्ते. । मासोपसदोरुभयोरपि विधाने वा-क्यभेदापत्तेश्च । अत. प्रकरणभेदात्कर्मान्तरमिति द्वितीयस्य तृतीये विचारि-तम् । तथाचाऽग्निहोत्रशब्दोऽनेकार्थत्वस्याऽन्याय्यत्वेन गौण्याऽङ्गीकृतस्तस्मिन्

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

विध्यातृरूपेणोद्देश्यत्वमिति भावः । अत्र दृष्टान्तमाहुः—न हीत्यादि । **कर्माङ्गत्वेन क्रियमाणस्येति** । कर्मसाद्गुण्यार्थं क्रियमाणस्य । तथाच यथा कौण्डपायिनामयने "मासमग्निहोत्रं जुहोती"त्यत्र किं नित्याग्निहोत्रा-नुवादेन मासलक्षणो गुणो विधीयत उत कर्मान्तरं विधीयत इति सन्देहे कर्मणः प्राप्तत्वाद्गुणविधिरत्रेति पूर्वपक्षीकृत्य तत्र "उपसद्भिश्चरित्वे" ति वाक्यान्तरात्कर्मैक्यपक्षे नित्याग्निहोत्रेऽपि तदापत्तेर्मासोपसदोरुभयोरपि विधाने वाक्यभेदापत्तेश्च प्रकरणभेदात्कर्मान्तरं तदिति द्वितीयस्य तृतीये चिन्तितम् । तेनाऽनेकार्थत्वस्याऽन्याय्यत्वाचत्राऽग्निहोत्रशब्दो गौण्या प्रवर्तमानो नित्याग्नि-होत्रधर्मातिदेशकत्वेनाऽङ्गीकृतः । तथाऽत्राऽपि प्रकरणभेदादुक्तवक्ष्यमाणधर्म-

---

१ तन्मतत्रेति क. २ यथाऽग्निहोत्रशब्द इति ख. ३ अनेकार्थत्वस्याऽऽम्नायगौ-येति ग.

शक्यम्। कर्ममार्गीयत्वात्। अपरञ्च। तत्र वराङ्गनावशीकरणादिकं

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

त्युचितम्। पुरुषोत्तमपरत्वे दूषणान्तरमप्याहुः—**अपरञ्चेति**। वराङ्गना-वशीकरणादेरपि पुरुषोत्तमसंबन्धित्वे फलदात्रैक्येन ब्रह्मसूत्रादिकमपि तादृशे कर्मण्युपयुञ्जीताऽविशेषादित्यपि सुवचं स्यात्। ततो वैराग्यादिविधानं व्यर्थमेव

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम्।

कर्मण्यग्निहोत्रधर्मातिदेशकः। तथाऽत्र प्रकरणभेदेन भेदान्मन्त्रोपासनायां भक्तिपदप्रयोगो मन्त्राधिष्ठातरि च गोपालादिप्रयोगो गौण्या तदेकतानत्वादीनां भक्तिधर्माणामुपासकभक्तानुग्राहकत्वादीनां चाऽतिदेशक इति न नामादिना भ्रमितव्यमिति भावः। ननूपासनामार्गीयत्वेऽपि गोपालमन्त्रोपासनायां सर्वाविशिष्टत्वस्याऽनपायाद्भक्तित्वमपि सुवचम्। तथा सति मार्गभेदोऽप्रयोजकः। लिङ्गापेक्षया प्रकरणस्य नैर्बल्यात्। अथवा। "देवत्वं च पितृत्वं च यमस्याऽस्ति द्विरूपते" तिवद्द्विरूपत्वं वा(?)ऽस्तु। तथा सति तस्यां पुरुषोत्तमस्योद्देश्यत्वे किं बाधकमिति शङ्कां हृदि कृत्वा आहुः—**पुरुषोत्तमेत्याद्यूह्यमित्यन्तम्**। तथाच फलभेदान्न गोपालमन्त्रोपासनस्य भक्ति-

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः।

भेदाच्च मन्त्रोपासनाया यो भक्तिपदप्रयोगस्तदधिष्ठातरि च यः पुरुषोत्तमादिपदप्रयोगः सोऽपि गौण्या उपासनायां तदेकतानत्वादीनां भक्तिधर्माणामुपास्ये चाऽनुग्राहकत्वादीनां पुरुषोत्तमधर्माणामतिदेशक एव न तु तयोर्भक्तिपुरुषोत्तमाभेदापादक इति भावः। ननूपासनामार्गीयत्वस्य प्रकरणसिद्धत्वाद्भक्तित्वस्य सर्वाविशिष्टत्वरूपलिङ्गसिद्धत्वाल्लिङ्गापेक्षया प्रकरणस्य दौर्बल्यान्न पूर्वोक्तं साधीय इति शङ्कायां लिङ्गनैर्बल्यायाऽऽहुः—**अपरञ्चेत्यादि विरोधादित्यन्तम्**। तथाच गोपालोपासनं भक्तिः। सर्वाविशिष्टत्वात्। न

---

१ वाराङ्गनेति क्वचित्. २ वेश्यावशीकरणादेरिति क. ख. ग. ३ गोपालादिपदप्रयोग इति क. ४ ज्ञानत्वस्येति ख.

फलत्वेन श्रूयते । न हि पुरुषोत्तमभक्तेस्तत्फलीभवितुमर्हति । अनर्थरूपत्वात् । " अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे । तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेदि"त्यादिवाक्यविरोधात् । अत एव शूद्रप्रतिष्ठापितमूर्त्तौ ब्राह्मणनमस्कारनिषेधो धर्मशास्त्रे

---

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

स्यादित्याद्यप्यूह्यम् । **अत एवेति** । यतः पुरुषोत्तमसंबन्धि कार्यमिदमनर्थकरं न युज्यते । सर्वागमविरोधात् । किन्तु मन्त्राधीनान्यदेवताकार्यमेवेदम् । अतः कारणाच्छूद्रप्रतिष्ठापितप्रतिमालिङ्गादिषु देवतान्तरसान्निध्याच्छूद्रकर्तृकदोषसंवलितत्वात्सर्वोपास्यत्वाभावाद्द्विजादिनमस्कारनिषेधो युज्यते । नो चेदप्रणामी प्रत्यवेयादेव[1] । "देवताप्रतिमां दृष्ट्वा यतिं दृष्ट्वा त्रिदण्डिनम् । नमस्कारं न कुर्या-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

रूपत्वमत एव न द्विरूपत्वमपीति भावः । कर्ममार्गीयभगवत्स्मरणादौ भक्तिरूपत्वाभावमतिदेष्टुं कर्ममार्गीयनमस्कारे भक्तित्वाभावगमकं धर्ममाहुः— **अत एवेति** मूले । तद्व्याकुर्वन्ति—**यत इत्यादि** । **नो चेदिति** । प्रतिष्ठापितस्य पुरुषोत्तमत्वे । तथाच सोपि नमस्कारो वन्दनभक्तिरूपो नेति भावः । एवं मन्त्रफलादेस्तद्धर्मान्तरस्य च विचारेणोपासनादिमार्गीयाणां[2]

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

भक्तिः । अनर्थफलकत्वादित्येवं भक्तिलिङ्गस्य सप्रतिसाधनत्वेन[3] निर्बलत्वादसंजातविरोधं प्रकरणमेव बलीय इति पूर्वोक्तमक्षुण्णमेवेत्यर्थः । नन्वस्त्वेवमुपासनायाम् । तथापि कर्ममार्गीयस्मरणस्य भक्तित्वं दुर्वारम् । सर्वाविशिष्टत्वस्याऽनर्थोपशामकत्वस्य च तत्राऽक्षुण्णत्वात् । लिङ्गद्वयापेक्षया प्रकरणस्यैकस्य नैर्बल्यादित्याशङ्कायां तत्रापि पूर्ववल्लिङ्गनैर्बल्यमाहुः—**अत एवेत्यादि वाक्यादित्यन्तम्** । **अत एवेति** । लिङ्गनैर्बल्यादेव । न नमस्यः

---

१ प्रत्यवायी स्यादेवेति घ. २ विचारेण नोपासनादिमार्गीयाणामिति क. ३ सप्रतिपक्षसाधनत्वेनेति ग.

**युज्यते। "यः शूद्रस्थापितं लिङ्गं विष्णुं वा विनमेद्द्विजः। स याति नरकं घोरं यावदाहूतसम्प्लवमि"ति। न हि ब्राह्मणानामीश्वरो न नमस्यः क्वचित्। "किं पुनर्ब्राह्मणाः पुण्या" इति**

---

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

चेत्प्रायश्चित्ती भवेन्नर" इत्याद्यागमविरोधोऽपीत्यर्थः। पुरुषोत्तमस्य मन्त्राधीनत्वमनुपपन्नम्। प्रमाणविरोधात्। भक्त्यधीनत्वं चोपपन्नम्। प्रमाणसद्भावादित्याहुः—

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम्।

मन्त्राणां भक्तित्वं निवारितम्। इदानीं तदधिष्ठातुर्विभूतित्वं यत्प्रागुक्तं तद्दूढीकर्तुं वैलक्षण्यं वदन्तीत्याशयेनाऽऽहुः—**पुरुषोतमस्येत्यादि** । तथा-

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः।

क्वचित्। अत्र काकुर्बोध्या। तथाच सर्वत्र नमस्य एवेत्यर्थः। अयमाशयः। कर्ममार्गे हि "यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु। न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतमि"त्यादिवाक्यैः पुरुषसूक्तेन पूजाविधानाच्च स्मरणकीर्तनवन्दनार्चनानि विष्णुविषयकाण्येव प्रायः सन्तीति स्मरणीयत्वादिवद्वन्दनीयत्वमपि तस्यैव सिद्ध्यति। तथा प्रतिमायामपि प्रतिष्ठादिना तस्यैवाऽऽवेशादि[1]। तस्य च पुरुषोत्तमत्वे शूद्रप्रतिष्ठापितमूर्तावपि तस्यैवाऽऽविष्टत्वात्तद्वन्दनमपि सर्वाविशिष्टं स्यात्। ततश्चोक्तै[2]विधवाक्यानि विरुध्येरन्। अतस्तदविरोधाय तत्र विष्ण्वन्तरावेश एव[3] वक्तव्यः। तथा सति सक्तप्रवृत्तावगुण्ठनन्यायेन भग्ने वन्दनस्याऽविशिष्टत्वे स्मरणादेरपि तद्विषयकत्वेन वन्दनतुल्ययोगक्षेमत्वाद्भ्रममेवं सर्वाविशिष्टत्वम्। ततश्च कर्ममार्गीयवन्दनं भक्तिः। सर्वाविशिष्टत्वादिति[4] साधने हेतोः स्वरूपासिद्धत्वम्। तथा तँ[5]दीयविष्णुस्मरणादिर्भक्तिः सर्वाविशिष्टत्वादिति साधनेऽपि न भक्तिः विष्ण्वन्तर-

---

१ तस्यैवारेदिरिति क. तस्यैवाविवेशादि इति. ग.ख.पुस्तके तु नास्त्येव किमपि। इष्यते त्वेवम्। २ उक्तविधिवाक्यानीति ग. ३ एवकारो नास्ति ख. ४ सर्वस्याऽविशिष्टत्वादिति ख. ५ त्वदीयेति ग.

वाक्यात् । किञ्च । मन्त्राधीनत्वं तत्तद्देवताया उच्यते । पुरुषोत्तमस्तु "न साधयति मां योगो न साङ्ख्यं धर्म उद्धव । न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता । न रोधयति मां योगो न साङ्ख्यं धर्म एव च । न स्वाध्यायस्तपस्त्यागो नेष्टापूर्त्तं न दक्षिणाः । व्रतानि यज्ञाश्छन्दांसि तीर्थानि नियमा यमा" इति "नाऽहं वेदैर्न तपसा न दानेन न चेज्यया । शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा । भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तपे" त्यादिवाक्यै "र्नाऽयमात्मे"त्याद्युक्तश्रुत्या च न मन्त्रोपासनाद्यधीन इति महद्वैलक्षण्यम् । "अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज । साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः । नाऽहमात्मानमाशासे मद्भक्तैः

---

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

किञ्चेत्यारभ्य पुरुषोत्तमेऽवधेयमित्यन्तेन । न रोधयति न स्वातन्त्र्य-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

चाऽत्र मूले भेदकनिदर्शनात्पुरुषोत्तमस्य न[1] तदुद्देश्यत्वमिति बोधितम् । एवं रूपभेदेनोपासनाभक्त्योर्भेदे सिद्धे फलभेदधर्मभेदाभ्यां चोपोद्बलिते पुनरुपा-

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

विषयकत्वात्तत्रत्यवन्दनवदिति प्रतिसाधनसद्भावादसाधकत्वेन सिद्धे लिङ्गनैर्बल्ये प्रकरणस्य बलवत्वान्न तस्याऽपि भक्तित्वमिति । एवमुपासनसंबन्धिफलादेर्धर्मान्तरस्य च विचारेण मन्त्रोपासनस्य कर्ममार्गीयवन्दनादेश्च भक्तित्वं तद्विधीनां भगवदुद्देश्यकत्वं च निवारितम् । अतः परमुपास्यधर्मविचारेण तदधिष्ठातुर्विभूतिरूपत्वं दृढीकर्तुं वैलक्षण्यं वदन्ति—**किञ्चेत्याद्यवधेयमित्यन्तम् । न रोधयतीति ।** न वशीकरोति । शेषमतिरोहितार्थम् ।

---

१ भेददर्शनादिति क. २ नेति नास्ति क. ३ बलवत्वादेतस्याऽप्यभक्तित्वमितीति ख.

साधुभिर्विना। श्रियं चाऽऽत्यन्तिकीं ब्रह्मन् येषा गतिरहं परा। ये दारागारपुत्राप्तप्राणान् वित्तमिमं परम्। हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे। मयि निर्बद्धहृदयाः साधवः समदर्शिनः। वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथे"त्यादिभिः "नाऽलं द्विजत्वं देवत्वमृषित्वं वाऽसुरात्मजाः। प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता। न दानं न तपो नेज्या न शौचं न व्रतानि च। प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनमि"त्यादिभिः "भक्त्याऽहमेकया ग्राह्यः। भक्त्या तुतोष भगवान् गजयूथपाये" त्यादिवाक्यसहस्रैर्भक्तिमात्राधीनत्वोक्त्या च ततो वैलक्षण्यं पुरुषोत्तमेऽवधेयम्। ननु मन्त्रादेरपि भगवदीयत्वात्तत्सम्बन्धि सर्वं

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

गतिमवरुणद्धीत्यर्थः। "येऽप्यन्यदेवताभक्ताः" "यो यो यां यां तनुं भक्तः" "वेदैश्च सर्वैरहमेव वेद्य" इत्यादिवाक्यैः सर्वेषां भक्तिफलरूपश्रीकृष्णसंबंधित्वकथनान्मन्त्रादीनामपि भक्तिरूपत्वमुपपद्यत एवेत्याह—**नन्विति**। अतिमूर्खो-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम्।

सनाया भक्तिरूपत्वमापाद्य मन्त्राधीनत्वं [1]तद्विष्युद्देश्यत्वं वा शङ्कत इत्याहुः—**येऽप्यन्येत्यादि**। **सर्वेषामिति**। यजनार्चनज्ञानोपासनानाम्। **आहेति**। मन्त्राधीनत्वाङ्गीकारेऽपि दोषाभावमाहेत्यर्थः। मूले—**भगवदीयत्वादिति**। परब्रह्मात्मकत्वमेवोपक्रम्य पठितत्वेन तथात्वात्। **तत्संबन्धीति** १ मन्त्रसंब-

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः।

एवमुपास्यनिष्ठधर्मविचारेण तदधिष्ठातुर्भेदः साधितः। एवं रूपभेदेनोपासनभक्त्योः सिद्धे भेदे फलभेदधर्मभेदाभ्यामुपोद्बलितेऽप्यनाघ्रातमीमांसागन्धत्वात्पुनर्हेत्वन्तरेणोपासनायां भक्तित्वमाशङ्कते—**ननु मन्त्रादेरित्यादि**।

[1] तद्विष्युपदेश्यत्वमिति ख.

भक्तिरूपमेनेति नोक्ताऽनुपपत्तिरिति चेत्। हन्तेदं "पाण्डुरमृत्पानीयमेव शुनस्तकमि" त्याभाणकमनुहरति। ननु कथमेवम्। इत्थम्। श्रीमदुद्धवपृष्टेन यदुवंशोदयाचलचूडामणिना पूजामार्गं निरूप्य "प्रतिष्ठया सार्वभौमं सद्मना भुवनत्रयम्। पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यतामियादि" ति प्रत्येकसमुदायाभ्यां फलभेदं निरूप्य "मामेव नैरपेक्ष्येण भक्तियोगेन विन्दति। भक्तियोगं स लभते

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

क्तिरियमिति दृष्टान्तेन विविनक्ति(२)—हन्तेति। हन्तेति विषादे। इद ते शङ्कावाक्यम्। पाण्डुरमृत्सम्बन्धि पानीयमेवाऽन्त सारासारानभिज्ञस्य शुनस्तक्रमित्येव विधमाभाणक लोकोक्तिप्रहेलिकावद्वाक्यमनुहरति सादृश्य प्राप्नोतीत्यर्थ। सादृश्यनिबन्धनोऽपि भ्रमो न घटते। स्फुटभेदोक्तेरित्याह—इत्थमिति। एकादशस्कन्धे भगवदुद्धवसंवादे प्रतिष्ठानिकेतनपूजानामेकैकश सार्वभौमादिफल, समुदिताना समानैश्वर्यं फल, सकामस्य। नैरपेक्ष्येण शुद्धस्वरूपमात्रनिष्ठभक्तियोगेन। पूजाफलं भक्तिरित्याह—भक्तियोगं स लभत इत्यनेन। उभयोस्तात्पर्यं

श्रीमत्पुरुषोत्तमप्रणीत तीर्थम्।

भिपुरश्चरणपूजादिकम्। नोक्ताऽनुपपत्तिरिति। न पुरुषोत्तमत्वतद्विध्युद्देश्यत्वानुपपत्ति। टीकायाम्—दृष्टान्तेन विविनक्ती(?)ति। मन्त्रादिस-

श्रीमत्पुरुषोत्तमप्रणीतो विवेक।

भगवदीयत्वात् परब्रह्म मन्त्रत्वमेवोपक्रम्य पठितत्वेन तथात्वात् तत्सम्बन्धि मन्त्रसम्बन्धि सर्वमर्चनपुरश्चरणादिक भक्तिरूपमिति नोक्ताऽनुपपत्तिर्नोपास्ये पुरुषोत्तमत्वानुपपत्तिर्न वा तद्विध्युद्देश्यत्वानुपपत्तिरित्यर्थ। अत्र समाधातु प्रतिवादिनोऽनाघ्रातमीमांसागन्धत्व स्फुटीकुर्वन्ति—हन्तेत्यादि। पाण्डुरमृत् काठिन्यं। शुन इति। अस्त सारासारानभिज्ञस्य। समादधते—श्रीमदि-

१ निरपेक्षेणेति क्वचित् २ कर्मसम्बन्धि इति ख

**एवं यः पूजयेत मामि"ति निरूपितम् । अत्र पूर्वार्द्धे एवकारेण पूर्वोक्तपूजाफलव्यवच्छेदपूर्वकं स्वस्य भक्तियोगफलत्वमुक्तमिति फलभेदादपि स्वरूपभेद आयात्येव । उत्तरार्द्धे च पूजायाः साध-**

---

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

दर्शयन्ति—**अत्रेति** । मामेव नैरपेक्ष्येणेत्यत्रैवकारेण । उत्तरार्द्धे भक्तियोगं

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

वन्धिनि भक्तित्वं निराकर्तुं, तदुक्तेः स्वरूपं दृष्टान्तेन स्फुटीकरोतीत्यर्थः । मूले—**फलभेदादपि स्वरूपभेद आयातीति** । कर्मभेदाध्याये याव- ज्जीवपादारम्भे विचारितम्—"यावज्जीवमग्निहोत्रं जुहोति" "अग्निहोत्रं जुहु- यात्स्वर्गकाम" इति वाक्याभ्यां किं भिन्नं कर्म विधीयत उत काम्येऽग्निहोत्र एव यावज्जीवरूपकालसंबन्धो धर्मो विधीयत उत नित्यकाम्यप्रयोगभेदो विधीयत इति । तत्र नामैक्याद्रूपैक्याद्भेदकान्तराभावाच्च कर्मभेदस्य वक्तुमशक्यत्वात्काम्याग्निहोत्र एव कालरूपो(?)विधीयत इति पूर्वपक्षः । सिद्धान्तस्तु यावज्जीवशब्दो न कालवाचकः । किन्तु लक्षकः । वाच्योऽर्थस्तु कृत्स्नजीवनम् । पुरुषधर्मः स न कर्मधर्मत्वेन विधातुं शक्यः । अतस्तं

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

**त्यादि** । सोर्ष्टि (?) समानैश्वर्यत्वम् । नैरपेक्ष्येण फलाकाङ्क्षाविरहेण । **एव- मिति** । नैरपेक्ष्येण । फलभेदादपि स्वरूपभेद आयात्येवेति कर्मभेदाध्याये यावज्जीवपादे चिन्तितम् । "अग्निहोत्रं जुहुयात्स्वर्गकामः" "यावज्जीवमग्निहोत्रं जुहोती" ति वाक्याभ्यां किं भिन्नं कर्म विधीयत उत काम्याग्निहोत्र एव याव- ज्जीवरूपकालसंबन्धो धर्मो विधीयत उत कर्मैक्येऽपि नित्यकाम्यप्रयोगभेदो विधीयत इति सन्देहे नामैक्याद्रूपैक्याद्भेदकान्तराभावाच्च कर्मभेदस्य वक्तु- मशक्यत्वात्काम्याग्निहोत्र एव यावज्जीवकालसंबन्धो धर्मो विधीयत इति पूर्व- पक्षः । राद्धान्तस्तु यावज्जीवशब्दो न कालवाचकः । किन्तु कृत्स्नजीवन-

---

१ कृत्स्नजीवनपुरुषधर्म इति क. २ सार्ष्टिमिति ग. ।

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

निमित्तीकृत्य प्रयोगो विधीयते । न चाऽग्निहोत्रनामाभ्यासः कर्मभेदहेतुः । निमित्तविशेषं पुरस्कृत्य श्रुतत्वेनाऽविशेषपुनःश्रुतेरभावात् । अतो जीवनस्य निमित्तत्वात्प्रयोगभेदः पर्यवस्यति । सति निमित्ते नैमित्तिकत्यागायोगान्नित्यत्व तस्याऽर्थसिद्धम् । तस्माज्जीवननिमित्तत्वान्नित्यकाम्यप्रयोगौ भिन्नाविति । एवं सति यथा तत्र कर्मभेदेऽपि निमित्तभेदात्प्रयोगभेदे नित्यं काम्यमिति स्वरूपभेदोऽर्थसिद्धस्तथाऽत्र ब्रह्मलोकपदसूचितकामनया नैरपेक्ष्यपदोक्तेन तदभावेन च पुरुषधर्मरूपनिमित्तभेदलाभादैक्याङ्गीकारेऽपि प्रयोगभेदसिद्धौ नित्यकाम्यत्वफलभेदात्स्वरूपभेदो न दुर्घट इत्यर्थः । भेदकान्तरमाहुः—**उत्तरार्द्धं इत्यादि** । एतन्निरूपणप्रयोजनकथनमुखेन स्वरूपभेदं दर्शि-

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

विशिष्टकाललक्षकः । तस्य वाच्योऽर्थस्तु कृत्स्नजीवनम् । पुरुषधर्मः स न कर्मधर्मत्वेन विधातुं शक्यः । अतस्तं निमित्तीकृत्य प्रयोगभेदो विधीयते । न चाऽग्निहोत्रनामाभ्यासः कर्मभेदहेतुः । निमित्तविशेषं पुरस्कृत्य श्रुतत्वेनाऽविशेषपुनःश्रुतेरभावात् । अतो जीवनस्य निमित्तत्वात्प्रयोगभेदः पर्यवस्यति । सति निमित्ते नैमित्तिकत्यागायोगात्तस्य नित्यत्वमर्थसिद्धम् । तस्मान्नित्यकाम्यप्रयोगौ भिन्नाविति । एवं सति यथा तत्र कर्मभेदेऽपि निमित्तभेदात्प्रयोगभेद एव फलं भिद्यत इति फलभेदान्नित्यं काम्यमिति स्वरूपभेदोऽर्थसिद्धस्तथाऽत्र ब्रह्मलोकपदसूचितपुरुषधर्मरूपया कामनया नैरपेक्ष्यपदोक्ततदभावेन च निमित्तेन पूजैक्येऽपि प्रयोगभेदसिद्धौ नित्यकाम्यप्रयोगन्यायेन फलभेदात्स्वरूपभेदोऽर्थादेवाऽऽयातीत्यर्थः । ग्रहिलत्वादार्थिकभेदकानङ्गीकारे शाब्द भेदकान्तरमाहुः—**उत्तरार्द्धं इत्यादि** । एतन्निरूपण-

१ विशेषपुन श्रुतेरिति क. २ पुरुषधर्मरूपनिमित्तभेदलाभादिति द्वयोरपि पाठ. । युज्यते त्वेवम् । ३ नैमित्तिकत्यागात्तस्येति ख. ४ पुरुषधर्मरूपतयेति ग. ५ नैमित्तिकेऽपीति ख. पूज्यैक्येऽपीति. ग.

नत्वं भक्तेश्च फलत्वं चेति स्पष्ट एव पूजादेर्भक्तेर्भेदः। भगवत्स्वरूपातिरिक्तफलके कर्मणि ज्ञाने वा न भक्तित्वम्। भक्तौ च न स्वरूपातिरिक्तफलकत्वम्। अतो न पूजादिर्भक्तिरिति निरूपणार्थमेव मामेवेत्यादि निरूपितमिति वेदितव्यम्। अन्यथा पूजाप्रकरणे तन्निरूपणमसङ्गतं स्यात्। "यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्। योगेन दानधर्मेण श्रेयोभिरितरैरपि। सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसे"ति तु भक्तिसाध्यं नाऽन्येन सिध्यत्यन्यसाध्यं भक्तेरानुषङ्गिकमिति कथनार्थम्। कल्पतरुस्वभावत्वज्ञापनाय चोक्तम्। अग्रे "स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छती"ति वचना-

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

स लभत इति वाक्ये। अत इति। यतः स्वरूपफलकत्वं निरपेक्षभक्तियोगस्यैव। यदि पूजादिकमपि भक्तित्वेनाऽभिमतं स्यात्तदाऽनेन मां विन्दतीत्येव ब्रूयात्। मामेव नैरपेक्ष्येणेति पार्थक्येन वचनमन्यसाधननिरूपणावसरे निरर्थकं स्यात्। किञ्च। यदि केवलभक्तेः कुत्राप्यसामर्थ्यं भवेत्तदा सहायभूतत्वेनाऽपि कर्मादीनां भक्तित्वं शङ्क्येत। तच्च सुतरां नास्तीत्याहुः—

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम्।

कुर्वन्ति—भगवदित्यादि स्यादित्यन्तम्। तदेतत्सर्वं हृदि कृत्वा टीकायामाहुः—यदीत्यादि निरर्थकं स्यादित्यन्तम्। तथाचैवं सिद्धे स्वरूपभेदे पूजाया भक्तित्वाभावान्न तत्र साक्षाद्भगवत उद्देश्यत्वमिति भावः। अग्रिमं विवृण्वन्ति—किञ्चेत्यादि। ननु फलभेदोऽत्र न स्वरूपभेदापादकः।

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः।

प्रयोजनकथनमुखेन स्वरूपभेदं दृढीकुर्वन्ति—भगवदित्यादि स्यादित्यन्तम्। तथाचैवं सिद्धे स्वरूपभेदे उपासनादिमार्गीयपूजाया भक्तित्वाभावान्न तद्विधौ साक्षाद्भगवत उद्देश्यत्वमिति भावः। ननु फलभेदो न स्वरूपभेदापादकः। यत्कर्मभिरिति वाक्ये भक्तेरेव फलान्तरकथनादित्याशङ्कायामाहुः—यत्कर्मभिरित्यादि। अग्र इत्यादिनोक्तो हेतुस्तर्कपर्यवसायी।

हिं साध्यत" इति वाक्याच्च न मन्त्रजपादेर्भक्तित्वम् । भगवदर्थमेव कृता भगवत्पूजा भक्तिर्भविष्यतीत्याशङ्कानिरासायोत्तरार्द्धे तादृश्यास्तस्यास्तत्साधनत्वमुक्तम् । अन्यथा पूजादिनेत्यादिना विरोधः स्यात् । एतेन लोके शास्त्रे वा क्वचित्तादृश्यां

---

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

**यत्कर्मभिरिति**। उत्तरार्द्धे एवं धर्मैर्मनुष्याणामित्यत्र। **अन्यथेति**। पूजादीनां देवतोद्देशेनैव प्राप्तत्वान्नान्तरीयकतदर्थित्वसद्भावमात्रेण भक्तित्वोक्तौ पूजादिनेत्याद्यसङ्गतं स्यादित्यर्थः। अतादृश्यास्तत्त्वेन शाब्दव्यवहारस्त्वन्यथाऽप्युपपद्यत एवेत्याहुः—**एतेनेति**। एवं यः पूजयेत मामित्यत्र द्वितीयया कर्मत्वं पुरुषो-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम्।

त्वमाशङ्क्य परिहरन्ति—**भगवदर्थमित्यादि**। उत्तरार्द्धपदस्य सन्दिग्धत्वाट्टीकायां तदर्थमाहुः—**एवं धर्मैरित्यादि**। यद्यपि "एवं यः पूजयेत मामि" त्यत्र एवमित्यनेन पूर्वार्द्धोक्तभक्त्यतिदेशान्नैरपेक्ष्यप्राप्तौ पूजाया अपि भगवदर्थत्वं प्राप्यते। तथापि न कण्ठोक्तम्। ऊनविंशाध्यायसन्दर्भे तु कण्ठोक्तम्। अत एवमुक्तम्। **नान्तरीयकेति**। भक्त्यविनाभूतेत्यर्थः। ननु भगवदर्थायां पूजायां सर्वत्र भक्तिपदं प्रयुज्यते। तस्य का गतिरित्यपेक्षायां तत्साधनाय वदन्तीत्याहुः—**अतादृश्या इत्यादि**। "भक्तियोगं स लभत" इति वाक्यविचारे पुरुषोत्तमस्याऽर्चनविध्युद्देश्यत्वमक्षुण्णमिति शङ्कायां वदन्तीत्या-

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः।

अपि संग्रहीतुं शक्यत्वाद्भगवदर्थायास्तस्या भक्तित्वमाशङ्क्य परिहरन्ति—**भगवदर्थेत्यादि**। तेन फलितमाहुः—**एतेनेत्यादि**। ननु माऽस्तु पूजाया भक्तित्वं तथापि भक्तियोगं स लभत इति वाक्यविचारे पुरुषोत्तमस्य पूजाकर्मत्वबोधनादर्चनविध्युद्देश्यत्वं न हीयत इति प्रतिज्ञाहानिरनिवार्येत्यत आहुः—**न चेत्यादि**। तथाचाऽन्यथानुपपत्त्याऽत्र लक्षणैवाऽऽदरणीये-

---

१ यद्यपीति नास्ति क.

तस्यां भक्तिपदप्रयोग औपचारिक इति ज्ञापितम् । न च मामितिपदेन पूजाया अपि विषयः पुरुषोत्तम एवेति वाच्यम् । विभूतिरूपस्याऽपि भगवद्रूपत्वात्तथोक्तम् । पुरुषोत्तमत्वे बाधकमुक्तमेव मन्त्रशास्त्र इत्यादिना । अन्यफलाद्यनुसन्धानराहित्यपूर्वकं भगवद्भावनायां क्रियमाणायां पुरुषोत्तमावेशोऽप्यन्तःकरणे पूज्ये च भवतीति ज्ञापनाय वा मामित्युक्तम् । अत एव

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

त्तमे प्राप्तं कथमपोद्यत इत्याशङ्क्याऽऽहुः—नचेति । विभूतिरूपस्येति । अवान्तरप्रलयेऽम्भसि शयानस्य ब्रह्मणो नारायणपदवाच्यत्वं यथा तथाऽत्राऽपीति भावः । बाधकमनर्थहेतुत्वं वशीकरणादौ । प्रकारान्तरेणाऽपि कर्मत्वमुपपादयन्ति—अन्यफलेति । अत एवेति । यत आविष्टपुरुषोत्तमे

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

शयेनाऽऽहुः—एवमित्यादि । उक्तव्याख्याने लक्षणादोषादाहुः—प्रकारान्तरेत्यादि । तथाच विभूतेरावेशस्य वा द्वारत्वान्न साक्षादुद्देश्यत्वं पुरुषोत्तमस्येति नाऽनेन वाक्येनाऽपि तत्सिद्धिरिति मूलाशयः । आविष्टपुरु-

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

स्यर्थः । ननु तथापि प्रकृतवाक्ये तात्पर्य्यानुपपत्तिगमकस्याऽभावाद्बीजाभावेनाऽत्र लक्षणाऽनुपपन्नैवेत्याकाङ्क्षायां पक्षान्तरमाहुः—अन्येत्यादि । तथाच माऽस्तु लक्षणा तथाप्यावेशस्यैव द्वारत्वान्न पुरुषोत्तमस्य साक्षादुद्देश्यत्वसिद्धिरिति न प्रतिज्ञाहानिरित्यर्थः । नन्वावेश एवाऽत्राऽभिप्रेत इत्यत्र किं गमकमित्यत आहुः—अत एवेत्यादि । आवेशद्वारकत्वादेव निरपेक्षपूजया भक्तिः फलिष्यति । तथाच फलमेवाऽऽवेशगमकम् । अन्यथा भक्ताविवाऽत्रापि स्वप्राप्तिरेव फलत्वेनोक्ता स्यादतस्तथेत्यर्थः । ननु पुरुषो-

१ तथोक्तेरिति क्वचित्. २ लक्षणदोषादाहुरिति क. ३ तथाप्यावेशस्या न्याऽभावान्न पुरुषोत्तमस्येति ख. ४ द्वारेत्यारभ्य तथाच निरपेक्षभक्तियोगे स्वस्येत्यन्तो ग्रन्थो नास्ति ग.

भक्तिस्तया फलिष्यति । यमेवैष वृणुत इति श्रुतेस्तदैव तद्वर-णात् । अत्राधिकारिभेदेन पूजाफलभेदोक्त्या यमेवेति श्रुतौ

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

आविष्टपुरुषोत्तमस्य कृतिरतस्तया भावनया विषयस्वाभाव्याद्भक्तिः फलं भवति नाऽन्यदित्यर्थः । तदैवेति । यदैव पुरुषोत्तमविषयभावना तदैव ततः पूर्वमेव तद्वरणात्तद्वरणफलास्तित्वनिश्चयादित्यर्थः । अत्रेति । पुरुषोत्तमभावनाभा-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

पोत्तम इति । पूज्य इति शेषः । मूले अत्राऽधिकारीति फक्किकायां श्रुताविति पदमित्यनुपपत्तिरित्यनेन संबध्यते । श्रुतौ यमेवेति सामान्योक्त्या स्वविषयकानुग्रहास्तित्वनिश्चयाभावेन लाभनिश्चयाभावे लाभोपायभूतेषु कर्मज्ञा-

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

त्तमस्य यद्युद्देश्यतयाऽपि न संबन्धस्तर्हि भावनया आवेशोऽपि कथं भवेदि-त्याकाङ्क्षायामाहुः—यमेवेत्यादि । तदैवेति । निरपेक्षपूजनेच्छाऽव्यव-हितपूर्वकाल एव । तथाच तादृशेच्छारूपकार्येण वरणानुमानात्तेनाऽऽवेश इत्यर्थः । ननु लोकानां नानासाधनेषु प्रवृत्तिदर्शनाद्भगवत्पूजादिषु कस्यचि-द्या प्रवृत्तिः सा वरणहेतुकैव वक्तव्या । एवं निश्चिते वरणे यमेवेति श्रुतौ स्वलाभस्यैव फलत्वेन कथनाद्यथाकथञ्चित्पूजायां प्रवृत्तस्याऽपि भगवत्प्राप्तिरेव भवित्रीति निश्चये कर्मज्ञानभक्तिषु फलान्तरं शृण्वतस्तत्तत्फलेच्छोर्निःशङ्का प्रवृत्तिर्न स्यात् । सशङ्कं प्रवृत्तौ च फलमपि न स्यात् । "संशयात्मा विन-श्यती"ति वाक्यात् । अतः श्रुतिविरुद्धा कथमत्र पूजाफलभेदोक्तिरित्याका-ङ्क्षायामाहुः—अत्रेत्यादि । श्रुतौ या उक्तरूपाऽनुपपत्तिः सा उक्तरीतिक-

१ अधिकारभेदेनेति सर्वत्रोपलब्धेषु पुस्तकेषु पाठः । भक्तितरङ्गिण्यनुरोधेन त्वेवम् । २ तट्टीकायामिति क. । ३ निश्चयाभावे इति क. । ४ लाभनिश्चयाभावे इति नास्ति क. ५ भावनाऽपि तस्य कथं भवेदिति रा.

कर्मज्ञानभक्तिषु निःशङ्कं फलार्थिप्रवृत्तिरनुपपन्नेत्यनुपपत्तिर्निरस्ता वेदितव्या। कर्मादिविधिषु विविधफलश्रवणात्तत्तत्फलरागवांस्तत्र तत्र यतिष्यत इत्युपपत्तेः। नन्वेवं पुरुषोत्तमार्थि-

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

वित्त्वाभावित्त्वाभ्यामधिकारिविशेषणाभ्यामधिकारिद्वैविध्यनिबन्धनः पूजाफलभेदः पुरुषोत्तमविषयत्वे भक्तिफलत्वमन्यथा पूर्वोक्तब्रह्मलोकादिफलत्वमिति विवेकाद्यमेवेति सामान्योद्देशेन साधनश्रमवैयर्थ्यमाशङ्क्य त्रिष्वपि तत्तत्फलार्थिनां प्रवृत्तिर्नोपपद्यत इति शङ्कानुदयोऽधिकारिविशेषनिश्चयादेवेति भावः। **कर्मादिविधिष्विति**। चोदनावाक्येष्वित्यर्थः। स्वविषयकवरणास्ति-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम्।

नादिषु तथेत्यर्थः। इदं चाऽनुग्रहस्य सत्फलमात्रं प्रति कारणत्वं मनसि

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः।

फलभेदोक्त्या निरस्तेत्यन्वयः। तथाच प्रवृत्तेर्वरणहेतुकत्वेऽपि तत्तत्फलरागानुमितेश्वरेच्छायाः प्रतिबन्धकत्वेन सहकारिविरहादधिकारे रागेण भिन्ने मु[1] तत्र प्रवृत्त्युपपत्तिरित्याशयेन पूजाफलभेदोक्तिरित्यर्थः। [2]अत्र पुनराशङ्कते—**नन्वित्यादि**। एवमिच्छाविशेषस्य प्रतिबन्धकत्वसहकारित्वाङ्गीकारे सहकारिवैशिष्ट्यादेर्ज्ञातुमशक्यत्वेन तथेत्यर्थः। यद्वा। ननु फला[3]न्तरानपेक्षया भगवद्भावनायो यमेवेति श्रुत्या वरणानुमानं यदुक्तं तन्न युक्तम्। "योगास्त्रय" इत्यादिना श्रेयःसाधनत्वेन विहितेषु कर्मज्ञानभक्तिरूपेषु साधनेषु प्रवर्त्स्यमानस्य (?) तच्छ्रुतिश्रवणेन स्वविषयकवरणास्तित्वसंशयोत्पत्त्या तेषु निःशङ्कप्रवृत्तिविघातापातात्। सशङ्कप्रवृत्तौ च फलाभावप्रसङ्गात्। अतः सर्वश्रुतिविरुद्धमेतदनुमानमित्यत आहुः—**अत्रेत्यादि**। तथाचेष्टसाधनताज्ञानौत्कट्यादेव निःशङ्क-

१ प्रवृत्त्युपपत्तिरित्यर्थ इति ख. २ अत्रेत्यत आरभ्य मुक्तेनोपपत्तिरित्यर्थ इति यावद्भाऽस्ति ग्रन्थः ख. गपुस्तके च नास्ति तथाच निरपेक्षभक्तियोगे स्वस्येत्यन्तोंऽशः। तदत्र यथाबुद्धि स्वयमेव शोध्यते। शोधनन्तु तत्स्थले ज्ञाप्यैतैव। ३ फलान्तरानपेक्षययेति क. शोधनं त्वेवम्।

प्रवृत्त्यनुपपत्तिः । मैवम् । तदर्थित्वस्यैव वरणकार्यत्वात् । अन्यथा तदनुत्पत्तेः । वरणे चाऽस्ति प्रकारद्वयं मर्यादापुष्टिभेदेन ।

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

त्वानिश्चयात्पुरुषोत्तमभजनं नोपपद्यत इत्याशङ्क्याऽऽह—**नन्विति** । यदेव वरणकार्यं निश्चायकं कारणस्य तस्य पुरुषोत्तमार्थित्वस्य स्फुटमुपलम्भादित्यर्थः । **अन्यथेति** । कारणमन्तरेणैव कार्योत्पत्ति(?)राकस्मिकत्वं चाऽऽपद्येतेति भावः । ननु कुत्रचिद्वरणकार्यपुरुषोत्तमार्थित्वं विनाऽपि स्वतः संबन्धः पुरुषोत्तमे दृश्यते । तस्य चाऽवश्यं कारणपूर्वकत्वं वाच्यम् । तच प्रकृते तद-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

त्वोक्तम् । अन्यथा तृतीयमार्गे एव प्रवेशयेदिति । **इत्युपपत्तेरिति** । उक्तश्रुतावात्मलाभस्यैव वरणसाध्यत्वेन कण्ठत उक्तत्वादुपपत्तेरित्यर्थः । तदेतद्विवृण्वन्ति—**अत्रेत्यारभ्येत्यर्थ इत्यन्तम्** । अग्रिमाशङ्कातात्पर्यमाहुः—**स्वविषयकेत्यादि** । तदर्थित्वेत्यादिनोक्तं हेतुं व्याचक्षते—**यदेवेत्यादिना** । तथाच कार्येण वरणानुमाने सुखेनैव प्रवृत्त्युपपत्तिरित्यर्थः । ननु तदर्थित्वस्य वरणकार्यत्वे किं मानमत आहुः—**अन्यथेति** । वरणाभावेऽपि तदर्थित्वाङ्गीकारे । तथाचाऽर्थापत्तिरेव मानमित्यर्थः । अग्रिममवतारयन्ति—**नन्वित्यादि** । **दृश्यत इति** । व्रजस्थेषु दृश्यते ।

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

प्रवृत्त्युपपत्तेः श्रुतिविरोधाभावेन तदनुमानं युक्तमेवेत्यर्थः । अत्र पुनराशङ्कते—**नन्वित्यादि** । तथाच निरपेक्षभक्तियोगे स्वस्य फलत्वेन कथनात्तत्र प्रवर्त्स्यमान(?)स्यैतच्छ्रुतिश्रवणे विरोधप्रतिसन्धानात्तत्प्रवृत्त्यनुपपत्तिर्वज्रलेपायितेत्यर्थः । तत्र समादधते—**मैवमित्यादि** । तथाच कार्येणैव कारणसामग्र्यनुमानात्सुखेनोपपत्तिरित्यर्थः । नन्वेवं कार्येण चेत्सामग्र्यनुमितिस्तदा पुरुषोत्तमार्थी

१ तदनुपपत्तेरिति क्वचित् । २ शरणसाध्यत्वेनान्ते उक्तत्वादिति क. ३ अत्रेदं शङ्कातात्पर्यमिति क. ४ चरणानुमाने इति क. ५ पुरुषोत्तमस्य भक्तावेवेति स.

आद्यस्तु तत्साधने भवति प्रवृत्तः । तथैव तद्वरणात् । परन्तु स्नेहोत्पत्तिपर्य्यन्तं विधिरेव तत्र प्रयोजकः । तदुत्पत्त्यनन्तरं च रागादेव तत्संबन्धिपदार्थे यतिष्यत इति विधेरप्रयोजकत्वम् । द्वितीयस्य तु प्रवृत्त्यप्रवृत्ती अप्रयोजिके । भगवता स्वस्यैव साधनत्वेनाऽङ्गीकारात् । अत एव "अह्न्यापृतं निशि शयानमतिश्रमेणे"ति गोकुलविशेषणं द्वितीयस्कन्धे ब्रह्मणोक्तमिति सर्व-

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

थित्वमन्तरेणाऽनुपपन्नमित्यत आहुः—वरणे चेति । साधने प्रवर्त्य तदनुरूपफलदानमात्स्नेहोत्पत्तेरिति मर्यादामार्गस्वरूपम् । द्वितीयस्येति । यद्यपि प्रथमेऽपि स्वकृतप्रवृत्त्यप्रवृत्ती न स्वरूपसंबन्धं कर्त्तुं शक्तुतस्तथाप्यवान्तरकृतिरपि द्वितीये नाऽपेक्षितेति वैलक्षण्यम् । अनुग्रहस्तूभयत्राऽप्यादिकारणत्वेन

श्रीमत्पुरुषोत्तमप्रणीतं दीधंम् ।

मूले—तत्साधन इति । भगवत्प्राप्त्युपायभूतस्नेहोत्पादके साधने । तथैवेति । साधनद्वारैव भक्तिं मां च प्राप्नोत्वितीच्छयेत्यर्थः । किञ्चेत्यादि-

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

भक्तावेव प्रवर्त्स्यते (?) । न कर्मादौ । भगवता च मार्गत्रयं नोच्यतेत्याकाङ्क्षायां तत्समाधानायाऽऽहुः—वरण इत्याद्यवदातमित्यन्तम् । तत्साधन इति । भगवत्प्राप्त्युपायभूते ज्ञानकर्मादिरूपे साधने । तथैवेति । साधनद्वारैव मां भक्तिं वा प्राप्नोत्वित्याद्याकारिकयेच्छया । तादृशे वरणे प्रमेयं बोधयन्ति—परन्त्वित्यादि । अत्रोदाहरणभूता अम्बरीषादयः । शेषं स्फुटमेव । तथाच सामग्रीज्ञानसत्त्वेन तस्य तथा प्रवृत्तिः सुखेनोपपद्यत इति न कोऽपि शङ्कालेश इत्यर्थः । तदेतदुक्तं सर्वमवदातमित्यनेन । एवं मन्त्रा-

१ प्रभुणेत्यपि क्वचित् । २ मार्गक्रमो नोच्यतेत्याकाङ्क्षायामिति ख. ३ मां भक्तिं प्राप्नोत्वित्याद्याकारिकेच्छयेति ख. ४ प्रणादीमिति क. ग. ५ तथा सामग्रीज्ञानाभावे तस्य तस्य तथा तथा प्रवृत्तिः सुखेनेत्यादि क. ६ इत्यन्वेनेति ग.

मवदातम् । किञ्च । विष्णुविषयकत्वेनैव भक्तित्वे कर्माङ्गत्वेन क्रियमाणविष्णुस्मरणादेरपि भक्तित्वापत्तिः । कर्ममार्गीयत्वान्न तथा। पूर्वोक्तन्यायेन विभूतिरूपस्यैव विष्णोः स्मरणादेस्तत्र विहि-

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

सर्वैरप्यङ्गीकार्य एव। "यदि वाग्यमलोपः स्याज्जपादिषु कथञ्चन। व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययमि"त्यादिविहितभगवद्व्याहरणस्मरणादेरेकविषयत्वाद्भ-क्तित्वमाशङ्क्य मार्गभेदेन भक्तित्वाभावमुपपादयन्तः सोपपत्तिकं प्रमाणानि

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

ग्रन्थमवतारयन्ति—यदीत्यादि । मूले—कर्ममार्गीयत्वान्न तथेति । पारार्थ्यस्य शेषलक्षणत्वेन कर्मशेषस्याऽपि भक्तित्वे "योगास्त्रयो मया प्रोक्ता" इत्यत्रोक्तं मार्गत्रित्वं बाध्येत । अङ्गत्वेन साङ्कर्यस्य तत्र तत्र दर्शनात् । अतो मार्गभेदे भेदोऽवश्यमभ्युपेयः । अत एव तादृशस्मरणादिकरणे भजत इति न प्रयुज्यत इत्यप्यनुसन्धेयम् । पूर्वोक्तं रूपभेदं द्रढयितुं तमेव स्मारयन्ति—पूर्वोक्तन्यायेनेत्यादि । पूर्वोक्तन्यायः सिद्धत्वादिना विशिष्टत्वम् । द्रढय-

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

देर्भगवदीयत्वेन भक्तित्वं शङ्कमानः समाहितोऽपि पूजादौ भक्तिपदप्रयोगस्य गौणत्वममन्वानः पुनः प्रत्यवतिष्ठेदि(?)ति तत्र प्रयोगस्य गौणत्वं द्रढयितुं दूप-णान्तरमाहुः—किञ्चेत्यादि । कर्ममार्गीयत्वान्न तथेति । पारार्थ्यस्य शेषलक्षणत्वेन कर्मशेषस्याऽपि भक्तित्वे "योगास्त्रयो मया प्रोक्ता" इत्यत्रोक्तं त्रित्वं बाध्येत । अङ्गसाङ्कर्यस्य तत्र तत्र दर्शनात् । तादृशे स्मरणे क्रियमाणे भजतीत्यपि प्रयुज्येत । तत्तु न दृश्यते । अतो विष्णुविषयकत्वरूपलिङ्गापेक्षया प्रकरणस्यैव बलवत्त्वान्न तथेत्यर्थः । एतदुपष्टम्भाय सिंहावलोकनेन पूर्वोक्तं स्मारयन्ति—पूर्वोक्तेत्यादि । पूर्वोक्तन्यायश्च सर्वाविशिष्टत्वाभावः । ननु

तत्वाच्च न तथा। कर्ममार्गे भगवद्विभूतीनामेवेज्यत्वात्। अत एव राजसूयं चिकीर्षुणा धर्मराजेन प्रभुं प्रति विज्ञापितम्—"यक्ष्ये विभूतीर्भवतस्तत्सम्पादय नः प्रभो" इति। अन्यथा साक्षाद्धरिं विज्ञापयंस्त्वामित्येव वदेत्। एतेन भगवदिच्छायां सत्यामेव भक्तस्य

---

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

दर्शयन्ति—**किञ्चेत्यादिना** । **एतेनेति**। यक्ष्ये विभूतीरित्यादिप्रमाणे कर्ममार्गे विभूतीनामेव विषयत्वमित्येनविदुषो भक्तस्य प्रार्थनया प्रभ्विच्छाभि-

श्रीमत्पुरुषोत्तमप्रणीत वीर्थम्।

न्ति—**कर्मेत्यादि वदेदित्यन्तम्**। ननु "यक्ष्यति त्वा मखेन्द्रेण राजसूयेन पाण्डव" इति नारदवाक्यात्—"मा यजन्तोऽध्वरैर्युक्ता" इति जरासुतरुद्धराज्ञ प्रति भगवद्वाक्याच्च नोक्त साम्प्रतमिति चेत्। न। "एव य पूजयेत मामि"त्यत्रेवाऽत्राऽपि विभूतिरूपस्य भगवद्रूपत्वमभिप्रेत्यैव तथोक्तेः। तत्र देवेष्वेव कर्मसचिववस्य दर्शनात्। प्रैषयाज्यापुरोवाक्यात्यागा(?)दिभिस्तथा निश्चयात्। साक्षात्पुरुषोत्तमपरत्वे विध्यपराधाभावेन प्रायश्चित्तविधिवैयर्थ्यप्रसक्तेः। "न रोधयति मां योगो न साङ्ख्य धर्म उद्धवे"ति पूर्वोक्तभगवद्वाक्यविरोधाच्च। एव च—"विष्णुरुपांशु यष्टव्य" "त्रेधा तन्डुलान् विभजेद्ये मध्यमा स्तुस्तानग्नये दात्रे पुरोडाशमष्टाकपाल कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधश्चरुं येऽणिष्ठास्ता विष्णवे शिपिविष्टाय शृते चरुम्"

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः।

कर्ममार्गस्य विभूतिपरत्वे उपासनायामिव गमक नोपलभामहे इति तत्राऽस्य भगवदुद्देश्यत्वमिति शङ्कायां तस्य तथात्वे गमकमाहुः—**अत एवेत्यादि**। **अत एवेति**। विभूतिपरत्वादेव। नन्वस्तु कर्ममार्गस्य विभूतिपरत्वम्। तथापि भक्तस्य कर्मकरणेऽनन्यत्व तु भज्यतैव। इतरसाधननिष्ठाराहित्यपूर्वकभक्त्येकनिष्ठत्वस्यैवाऽनन्यतापदार्थत्वादित्यत आहुः—**एतेनेत्यादि**। ननु

---

१ पुरोनुवाक्यासादिभिरिति ख २ शिपविष्टायेति वदेवेच्चेद कर्मसचिवत्वस्य दर्शनात्-प्रैषयान्यापुरोक्याश्रुत चरुमिति च

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

"वैष्णवं यज्ञसन्तत्यै त्रिकपालं द्विजोत्तमाः । पुरोडाशं निरवपन् वीरसंसर्गशुद्धये" इत्यादिषु नामरूपसाम्येऽपि इतरतौल्याद्विशेषणाद् "धिया विशुद्धया दध्यावि"ति कथनाच्च विभूतिपरत्वं न क्षुयते । तथा पञ्चमस्कन्धे "नाभिरपत्यकामोऽप्रजया मेरुदेव्या भगवन्तं यज्ञपुरुषमवहितात्माऽयजते"त्युक्ते यागे यः परमपुरुषप्रादुर्भावः सोऽपि "तस्य ह वा व श्रद्धया विशुद्धभावेन यजतः प्रवर्ग्येषु प्रचरत्सु द्रव्यदेशकालमन्त्रर्त्विग्दक्षिणाविधानयोगोपपत्त्या दुरधिगमोऽपि भगवान् भागवतवत्सलतया सुप्रतीकमात्मानमि"त्यादिना "आविश्चकारे"त्यन्तेन द्रव्यमन्त्राद्यगम्यत्वकथनपूर्वकं स्वीयवात्सल्येनैवोक्त इति न तेनाऽपि यागादेः साक्षात्पुरुषोत्तमपरत्व सभावयितुं शक्यम् । एवमेव

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

"यक्ष्ये विभूती"रिति वाक्यमात्रेण कर्ममार्गस्य विभूतिपरत्वस्थापनमनुचितम् । "यक्ष्यति त्वा मखेन्द्रेणे"ति राजसूयप्रकरण एव नारदवाक्यात् । "मा यजन्तोऽध्वरैर्युक्ता" इति मागधरुद्धराज्ञः प्रति भगवद्वाक्याच्चेति चेन्न । "एव यः पूजयेत मामि"त्यत्रैव त्वामित्यत्राऽपि विभूतिरूपस्य भगवदभिन्नत्वमभिप्रेत्यैव तथोक्तेः । यागे कर्मसचिव वस्य देवेष्वेव दर्शनात् । प्रैषयाज्यापुरोनुवाक्यादिभिस्तथा निश्चयात् । साक्षात्पुरुषोत्तमपरत्वे विष्ण्वपराधाप्रसक्त्या प्रायश्चित्तविधिवैयर्थ्यापत्तेश्च । "न रोधयति मां योग" इत्यादिपूर्वोक्तवाक्यविरोधाच्च । एवं च "विष्णुरुपांशु यष्टव्य" इत्यत्राऽपि विभूतिरूप एव सः । "विश्वेदेवा उपांशु यष्टव्या" इत्यादिवाक्यदर्शनेनेतरतौल्यात् । एवमन्यत्राऽपि ज्ञेयम् । न च पञ्चमस्कन्धोक्ते अपत्यकामस्य नाभेर्यागे भगवत. प्रादुर्भावात्कथं विभूतिपरत्वमिति शङ्क्यम् । तत्र भक्त्यैव भगवदाविर्भावात् । "तस्य ह वा य श्रद्धया यजतः प्रवर्ग्येषु प्रचरत्सु द्रव्यदेशकालमन्त्रर्त्विग्दक्षिणाविधानयोगोपपत्त्या दुरधिगमो भगवान् भागवतवत्सलतया सुप्रतीकमात्मानमाविश्च-

१ तामिधयार्दिति रा. २ विष्ण्वपराधप्रसक्तेरि रा. ३ सुप्रतीक आत्मानमिति क. ग.

कर्मकरणम् । तत्र चोक्तानां देवानां तद्विभूतित्वेनैव यागः । अन्यथाऽनन्यत्वभङ्गप्रसङ्ग इति सूचितम् । अपरश्च । तत्तदुपासकस्य

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

ज्ञान एव भक्तिसमयसङ्कोचेन कर्माचरणम् । नो चेत्—"मत्कर्मकृन्मत्परमः" "अनन्यचेताः सततम्" "अनन्याश्चिन्तयन्तो मामि"त्यादिभिरप्राप्तावसरत्वादेव कर्मणामप्राप्तेरुपस्थितभजनपरित्यागेन स्वामिद्रोहप्रसङ्गादसामञ्जस्यमेवेति ज्ञेयम् । फलभेदादपि कारणभेदो युक्त इत्याहुः—अपरश्चेति ।

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

पृश्निसुतपस्तपस्यपि ज्ञेयम् । तत्रापि "तपसा श्रद्धया नित्यं भक्त्या च हृदि भावित" इति वाक्यदर्शनात् । एवं सिद्धे कर्मणां विभूतिपरत्वे यत्र तादृशवाक्याभावेऽपि प्रादुर्भावादिकथनं तत्राप्युक्तन्यायक एव शास्त्रार्थो बोध्यः । तदेतत्सर्वं मनसि कृत्वा मूले टीकायां च विभूतीनामेवेत्येवकार उक्तः । टीकायाम्—कारणभेद इति । तत्तत्फलकारणीभूतानामुपासनादीनां भक्तेः

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

कारे" ति कथनात् । एवमेव पृश्निसुतपस्तपस्यपि ज्ञेयम् । तत्रापि "तपसा श्रद्धया नित्यं भक्त्या च हृदि भावित" इति वाक्यात् । एवं सिद्धे कर्मणां विभूतिपरत्वे यत्र तादृशवाक्याभावस्तत्रापि प्रादुर्भावहेतुत्वेन भक्तिः कल्प्येति दिक् । भगवदिच्छा च स्वस्य साधनसम्पत्त्यनन्तरं तत्कर्मकरणेच्छोत्पत्तौ भगवद्विज्ञापने तदनुकूलसंभारारम्भणादौ विघ्नाभावाद्भगवद्भक्ताज्ञादिभिर्बोध्या । नन्वस्तु कर्मादीनां विभूतिपरत्वं तथापि "यथाऽद्रिप्रभवा नद्य"इति वाक्यादन्ततस्तैरपि भगवत एव प्राप्तिरिति फलतो विशेषाभावात्तथात्वेऽप्यदोष इति शङ्कायां तैर्विलम्बं तेषां प्रतिबन्धग्रस्तत्वं च वक्तुं ज्ञानमार्गस्याऽपि क्लेशसाध्यत्वाद्भक्तेः सकाशान्न्यूनत्वं च वक्तुं सकामकर्मणोऽतिजघन्यत्वं च वक्तुमाहुः—अपरश्चेत्यादि निरूपित इत्यन्तम् । अत्र तत्तदुपासकेत्यनेनौत्तरतन्त्र-

१ भक्तिरिति नास्ति ख. २ भगवदिच्छा आरभ्य इत्यादिनेतीति प्रतीकपर्यन्तो ग्रन्थो नास्ति क.

तत्तत्सायुज्यं परमफलम्। "देवान् देवयजो यान्ती"ति वाक्यात्। "यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय सदा तद्भावभावित" इति वचनात्। एवञ्च सत्येकादशस्कन्धेऽस्मत्प्रभुणा "केवलेन हि भावेन गोप्यो गावः खगा मृगाः। येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसे" ति महता प्रबन्धेन गोकुलवासिनां स्वप्राप्तिं निरूप्य "यन्न योगेन साङ्ख्येन दानव्रततपोध्वरैः। व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपी"तीतरसाधनवदप्राप्यत्वं स्वस्य निरूपितमिति भक्त्यतिरि-

---

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम्।

सकाशाद्भेद इत्यर्थः। अपरञ्चैतादौ मूले तत्तदुपासकेत्यनेन औचरतन्नस्तक्रतुन्यायः स्मार्यते। तत्र हि "यथा क्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवती"ति श्रवणात्। तत्रापि नानादेवोपासकस्य फलव्यवस्थाबोधनाय द्वितीयं वाक्यम्—**यं यमित्यादि**। तथाच तस्याऽपि न[1] भगवत्सायुज्यमिति भावः। श्रौतस्मार्त्तानां योगादीनां भगवत्सायुज्यहेतुत्वं प्रतिक्षिपन्तस्तेनेष्टसिद्धिमाहुः—**एवञ्चेत्यादि। एवञ्च सतीति**। विभूतिपराणां फले

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः।

सत्क्रतुन्यायः स्मार्यते। तत्र—"यथा क्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवती"ति श्रवणात्। "यं यं वा पी"ति द्वितीयवाक्येन नानादेवोपासकस्य तत्तद्देवीपानुसृता[2] फलव्यवस्थोच्यते। तेन "यावदधिकारमाधिकारिकमि"ति न्यायेन विलम्बस्तेषामभक्तत्वे पुनरावृत्तिश्च—"अन्तवत्तु फलं तेषामि"ति वाक्यानुसारिणी बोध्यते। एवं[3] च सतीत्यादिना प्रसङ्गतो योगादीनामप्यसाधकत्वं बोध्यते। तेन "रमते निजभक्तेष्वि"ति प्रतिज्ञातस्य प्रामाणिकत्वं दृढी क्रियते। **एवञ्च सतीति**। विभूतिपराणां फले उक्तवाक्याभ्यां निर्द्धारिते सति।

---

१ नेति नास्ति ख. २ तत्त्वदीपानुसृताऽप्यवस्थोच्यत इति ख. ३ एवं चेत्यादिः परम्परयाऽपि नाऽऽगमनमित्यन्तोंऽशो नास्ति ग.

कसाधनप्राप्यं न पुरुषोत्तमस्वरूपमिति निश्चीयते। गीतासु च पार्थेन "एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते। ये चाऽप्यक्षरमव्यक्तं तेषां के योगवित्तमा" इति प्रश्ने कृते "मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते। श्रद्धया परयोपेतास्ते मे युक्ततमा मता" इति भक्तिमार्गीयोपासनस्य ज्ञानमार्गादुत्कर्षमुक्त्वा "ये त्वक्षरमि"त्यादिना ज्ञानमार्गिणामपकर्षमुक्तवान् भगवानिति न ज्ञानमार्गस्याऽपि पुरुषोत्तमविषयत्वम्। अत्र "ते प्राप्नुवन्ति मामेवे"त्यत्राऽक्षरस्यापि पुरुषोत्तमाधिष्ठानत्वेन तद्विभूतिरूपत्वान्मामित्युक्तम्। न चाऽक्षरमेव पुरुषोत्तम इति वाच्यम्। "कूटस्थोऽक्षर उच्यते" "उत्तमः पुरुषस्त्वन्यः" "अक्षरादपि चोत्तम" इति भगवद्वचनात्। कर्ममार्गोऽप्येवमेव ज्ञेयः। तथाहि। "यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः। वेदवादरताः पार्थ नाऽन्यदस्तीति वादिन" इत्यादिना। "त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते। ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान्। ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे

---

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम्।

उक्तवाक्याभ्यां निर्द्धारिते सति। तथाच तत्र तेषां फलं निर्द्धारितम्। अत्र स्वस्याऽप्राप्यत्वमुक्तम्। तेन तत्प्राप्यस्य विभूतित्वं तत्क्रतुन्यायादपि सिद्धमतीत्यर्थः। ज्ञानमार्गस्याऽपि तथात्वाय गीतास्वित्यादिग्रन्थः। सकामकर्ममार्गस्याऽतिजघन्यत्वायाऽग्रिमः कर्ममार्ग इत्यादिर्ग्रन्थः। टीकायाम्—

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः।

तत्र तेषां फलं निरधारि। अत्र स्वस्याऽप्राप्यत्वमवादि। तेन तत्प्राप्यस्य विभूतित्वं तत्क्रतुन्यायादपि बोध्यते। गीतासु चेत्यादिना ज्ञानमार्गस्याऽपि भक्तिमार्गापेक्षया न्यूनत्वं बोध्यते। कर्ममार्गेत्यादिना च सकामकर्मणः परम्परयाऽपि नाऽऽगमनं किन्त्वनिष्टपर्यवसायित्वमिति निरूप्यते। एवमेव ज्ञेय इत्यत्र

पुण्ये मर्त्यलोकं विशन्ति । एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्त" इत्यादिभगवद्गीतासु श्रीभागवते च "अथ यो गृहमेधीयान् धर्मानेवाऽऽवसन् गृहे । काममर्थं च धर्मान्स्वान् दोग्धि भूयः पिपर्ति तान् । स चापि भगवद्धर्मात्काममूढः पराङ्मुखः । यजते क्रतुभिर्देवान् पितृंश्च श्रद्धयाऽन्वित" इत्यादि "ये त्विहाऽऽसक्तमनसः कर्मसु श्रद्धयाऽन्विताः । कुर्वन्त्यप्रतिषिद्धानि नित्यान्यपि च कृत्स्नशः । रजसा कुण्ठमनसः कामात्मानोऽजितेन्द्रियाः । पितॄन्यजन्त्यनुदिनं गृहेष्वभिरताशयाः । त्रैवर्गिकास्ते पुरुषा विमुखा हरिमेधसः॥ कथायाः कथनीयोरुविक्रमस्य मधुद्विष" इत्यादिना जायस्व म्रियस्वेति तृतीयमार्गप्रवेशो निरूपित इति ।

---

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

स्पष्टं व्याख्यातप्रायं मूल एव । पूजायाः कर्मत्वेऽपि भक्तित्वं शङ्कते—

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

**पूजाया इत्यादि** । एवं भक्त्यतिरिक्तमार्गाप्राप्यत्वे पुरुषोत्तमस्य निर्णीते पूजाया भक्तित्वेन पुरुषोत्तमप्रापकत्वं भक्तित्वापादनेन शङ्कत इत्यर्थः । तथाचोपासनां कर्मकाण्डं चाऽऽरभ्याऽधीताया भक्तित्वाभावेऽपि भक्त्यन्तःपा-

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

हेतुः—**इत्यादिनेति** । इत्यादिभगवद्गीतास्विलस्य तृतीयमार्गप्रवेशो निरूपित इत्यनेन संबन्धः । तेन भक्त्यतिरिक्तमार्गे भगवतः साक्षात्संबन्धाभावान्न तद्विषयुद्देश्यत्वं भगवत इति साधितम् । तत्र पुनः प्रतिज्ञाहानिमापा-

---

१ इत्यादीत्येतत्पदं लेखकप्रमादात्प्रक्षिप्तमिव भाति । अन्तर्गडुभूतत्वात् । तत एव नाऽन्यतमयाऽपि व्याख्यया तदन्वयो विचारितः । अन्यथा नाऽन्यदस्तीति वादिन इत्यादिनेतीत्याद्यन्तपदसम्बन्धं विवृण्वन् विवेकः कुतो नु तदिदमेव व्याख्यातुं प्रासरिष्यत् । सर्वपुस्तकोपलब्धन्तु नाऽस्माभिरपलपितव्यम् ।

ननु नवविधभक्तावर्चनस्याऽप्युक्तत्वात्कथं न पूजायास्तथात्वमिति चेत्। अत्र वदामः। श्रवणादिनवकमप्यधिकारिभेदेन क्रियमाणं

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

नन्विति। पूर्वमुक्तमपि प्रकारान्तरेणाऽऽह—अत्रेति। त्रयाणामसङ्की-

श्रीमत्पुरुषोत्तमप्रणीत तीर्थम्।

र्णत्वात्तस्यास्तदविलक्षणत्वात्तेन रूपेणाऽर्चनविधौ पुरुषोत्तमस्योद्देश्यत्वं दुष्परिहरमिति शङ्काग्रन्थस्याऽऽशयः। प्रकारान्तरेणेति। नवविधभक्तीनां स्वरूपविचारेण। एतासां लक्षणं तु—भगवद्वाचकपदवाक्यानां भगवति शक्तितात्पर्यनिर्द्धारं श्रवणम्। तादृशनिर्द्धारपूर्वकमुच्चारणं कीर्त्तनम्। तथैव स्वरूपचिन्तनं स्मरणम्। पादसेवनं परिचर्य्या। अर्चनं पूजनम्। दास्यं कर्मार्पणम्। सख्यं तद्विश्वासादि। आत्मनिवेदनं देहसमर्पणम्। "यथा विक्रीतस्य गवाश्वादेर्भरणपालनादिचिन्ता न क्रियते तथा देहं तस्मै समर्प्य तच्चिन्तावर्जनमि"ति श्रीधरीये। अत्रेति। अनया भङ्ग्या पुरुषोत्तमोद्देश्यत्वशङ्कायां तस्या भक्तिबहिर्भावाय सर्वभक्तीनां स्वरूपभेदं ब्रूम इत्यर्थः। मूलेऽधिकारभेदेन तत्तन्मार्गीयत्व रूपभेदाभावेऽपि नित्यकाम्याग्निहोत्रन्यायेन स्वरूपभेदाद्बोध्यम्। तथा तात्पर्य्यनिर्णये फलस्याऽपि पृथक् प्रयोजकत्वात्तेनाऽपि स्वरूपभेदो न दुरुपपादः। तेन भक्तौ फलान्तरनिरूपणं तस्याः कल्प-

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः।

यन् प्रत्यवतिष्ठते—ननु नवेत्यादि। तथात्वमिति। भक्तित्वम्। तथाचोपासनां कर्मकाण्डं चाऽऽरभ्याऽधीतायाः पूजाया भक्तित्वाभावेऽपि नवविधभक्त्यन्तःपातिन्यास्तस्याः पूर्वोक्ताविलक्षणत्वाद्भक्तित्वेन रूपेणाऽर्चनविधौ पुरुषोत्तमस्योद्देश्यत्वं दुष्परिहरम्। सिद्धान्तिना श्रवणादिनवकस्य सर्वाविशिष्टत्वेन पुरुषोत्तमपरत्वाङ्गीकारात्। ततश्च प्रतिज्ञाहानिर्वज्रलेपायितेत्यर्थः।

१ पूर्वोक्तविलक्षणत्वादिति ख पूर्वमित्यादिरन्यथा चरणामृतेनाऽपीत्यन्तो ग्रन्थो नास्ति ग.

सत् कर्मज्ञानोपासनाभक्तिमार्गीयत्वेनाऽनेकविधं भवति। तथा-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम्।

तदस्वभावत्वज्ञापनायेति पूर्वं यदुक्तं तदत्र निष्कृष्यते। तथाचाऽयमर्थः। एकादशे विंशाध्याये भगवता कर्मज्ञानभक्त्याख्यास्त्रयो योगा नृणां श्रेयोर्थमुक्ता अधिकारिभेदेन निष्कृष्टाश्च। सप्तदशे च "यथाऽनुष्ठीयमानेन त्वयि भक्तिर्नृणां भवेत्। स्वधर्मेणाऽरविन्दाक्ष तन्मे व्याख्यातुमर्हसी"ति प्रश्ने चातुर्वर्ण्यचातुराश्रम्यधर्माश्चोक्ताः। तथा सति भक्त्यर्थं कर्माणि कुर्वतः सकामस्य कर्मभक्तत्वात्तादृशस्य त्रिवर्गकामनायां तेन क्रियमाणस्य कर्ममार्गीयत्वम्। उपासनाया अपि मानसकर्मत्वेन तच्छेषस्य तथात्वेऽपि कर्ममार्गीय एवाऽन्तर्भावः। ज्ञानमार्गीयस्य तु तदीयत्वं स्पष्टमेव। भक्तिमार्गीयेऽपि तथात्वं तथा। इत्यभिसन्धायाऽऽहुः—**त्रयाणामिति**। एवं च कर्मोपासनयोः फलभेदेऽपि कर्ममार्गीयत्वेनैवाऽसङ्कीर्णता। तथैव भक्तिमार्गीयस्याऽपीति त्रित्वं सूपपन्नम्।

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः।

तत्र समादधते—**अत्र वदाम इत्यादिना**। अत्र एवं पुरुषोत्तमोद्देश्यकत्वशङ्कायां वदामः श्रवणादिनवकस्याऽधिकारिभेदेन स्वरूपभेदमुपपादयाम इत्यर्थः। तथाच "मदर्पणं निष्फलं वा सात्त्विकं निजकर्म तत्। राजसं फलसङ्कल्पं हिंसाप्रायादि तामसमि"त्येकादशे भगवता एकस्यैव कर्मणोऽधिकारिभेदेन नानारूपत्वकथनात्तथैव गीतायामपि प्रतिपादनाद्रूपफलादिवदधिकार्यपि स्वरूपभेदक इति तेन भिन्ने श्रवणादिस्वरूपे तादृशस्य श्रवणादेरविशिष्टत्वे निवृत्ते ततो भक्तित्वस्याऽपि निवृत्तेस्तत्र विभूतेरेव संबन्ध इति न भगवदुद्देश्यत्वम्। प्रवृत्तिस्तु उद्देश्यत्वभ्रमादेव। अन्यथा पूर्वोक्तशास्त्रबाधापत्तेः। एवं निवृत्त उद्देश्यत्वे प्रतिज्ञा सुस्थिरैवेति भावः। तदेतदभिसन्धायाऽऽहुः—

१ तद्दर्शनमुच्यत इति क. २ कर्मभक्तित्वादिति क. ३ कर्ममार्गीयत्व एवेति ख. ४ भगवदुद्देश्यत्वमिति ख. ५ उद्देश्यभ्रमादेवेति ख.

हि । श्रीभागवतसहस्रनामादिश्रवणकीर्त्तनयोः फलत्वेन हि चत्वारोऽप्यर्था उच्यन्ते । तत्र त्रिवर्गकामेन क्रियमाणः श्रवणादिः कर्ममार्गीय एव । तत्राप्यर्थाद्यर्थिभिर्विहितत्वेन कृतश्चेत्तदा स तथा । वृत्त्यर्थं चेत् कृषिवल्लौकिक एव । शौचार्थिगङ्गास्पर्शवच्च । न हि तस्य मलनिवृत्त्यतिरिक्तो धर्म उत्पद्यते । प्रत्युत निषिद्धाचरणात्पापमपि । एतेन विहितजातीयं कर्म यथाकथञ्चित्कृतं-

---

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

र्णोदाहरणमाहुः—तथाहीति । तदा स तथेति । स श्रवणादिस्तथा पूर्वोक्तकर्ममार्गीय एवेत्यर्थः । यद्यपि त्रिवर्गमध्ये अर्थार्थित्वमुक्तमेव तथापि धर्मराहित्यपूर्वकत्वकथनाय पुनर्वचनम् । वृत्त्यर्थमिति । वृत्तिर्जीवनम् । एतेनेति । भावभेदात्फलभेदकथनेनेत्यर्थः । साक्षादेव वैदिककर्मणः फलो-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

मूले अर्थाद्यर्थिभिरित्यनेनाऽऽदिपदेन कामपूजे संगृह्येते । वृत्त्यर्थमिति वृत्तिपदमप्यविहितरीतिककामपूजयोरुपलक्षकम् । गङ्गास्पर्शेति । नद्यात्मकगङ्गास्पर्शो न तूद्धृतजलस्पर्शः । उद्धृतजलस्य तदर्थं स्पर्शे दोषस्य स्मृत्यगोचरत्वादिति स्मार्त्ताः । भगवद्भक्तास्तूद्धृतेऽपि तादर्थ्ये दोषं मन्यन्ते । अन्यथा चरणामृतेनाऽपि तथा करणे दोषाभावप्रसक्तेः । न च विशेषवचनाभावाल्लोकविद्विष्टत्वाद्वाऽत्र दोषो न तत्रेति वाच्यम् । तस्याऽत्राऽपि तौल्यादिति । पापमपीति । *"तपो न कल्कोऽध्ययनं न कल्कः" इत्यादिवाक्येभ्य इत्यर्थः* । टीकायाम्—साक्षादित्यादि । तथाच तादृशे कर्मणि वैदिककर्मत्वमेव

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

श्रवणादीत्यादि । कर्ममार्गीय एवेति । तादृशाधिकारिणस्तन्मार्गीय-

---

१ शौचार्थं गङ्गास्पर्शवच्चेति क्वचित् । विवेकेन तु स्पर्शवच्चेति चकारो नास्तीति भाति । २ कृतं मुख्यफलायेति क्वचित् ३ कामपूजा संगृह्यत इति क. ४ गङ्गास्पर्श इतीति द्वयोरपि पुस्तकयोः पाठः । मूलानुरोधी त्वयं ।

**मुक्फलायेति निरस्तम् । तुरीयाश्रमे ज्ञानोदयहेतुचित्तशुद्धिहेतुत्वेन क्रियमाणः श्रवणादिर्ज्ञानमार्गीयः। "यथा यथाऽऽत्मा प-**

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

दयान्न कृतिमात्रेण साफल्यमित्यर्थः । **तुरीयाश्रम इति** । सर्वत्र - कृतिसा-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम्।

दुर्घटं चेत्तादृशपूजायामपि तादृशत्वाद्भक्तित्वं सुतरां दुर्घटमित्यर्थः । मूले कर्ममार्गयज्ञानमार्गेऽपि परम्परायास्तुल्यत्वात्तदीयस्वरूपमाहुः—**तुर्याश्रम इत्यादि । यथा यथाऽऽत्मेति** । आत्मा अन्तःकरणम् । वाक्योत्तरार्द्धं तु—"तथा तथा पश्यति वस्तु सूक्ष्मं चक्षुर्यथैवाऽञ्जनसम्प्रयुक्तमि"ति । इदं वाक्यमेकादशीयचतुर्दशाध्यायस्थम् । तत्राऽऽरम्भे—"भवतोदाहृतः स्वामिन् भक्तियोगोऽनपेक्षितः । निरस्य सर्वतः सङ्गं येन त्वय्याविशेन्मन"इति प्रश्ने

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः।

स्वात्तथेत्यर्थः । अर्थादीत्यादिपदेन काम' पूजा च संगृह्यते । वृत्त्यर्थमिति • वृत्तिपदमविहितरीतिकपूजाकामयोरप्युपलक्षकम् । गङ्गास्पर्शवदित्यत्र गङ्गास्पर्शो नद्यात्मकतत्स्पर्शः । न तूद्धृततज्जलस्पर्शोऽपि । उद्धृतजलस्य तदर्थं स्पर्शे दोषस्य स्मृत्यनुक्तत्वादिति स्मार्त्ताः। भगवद्भक्तास्तु तदर्थमुद्धृतेऽपि जले दोषं मन्यन्ते। अन्यथा चरणामृतेनाऽपि तथा करणे दोषाभावप्रसक्तेः । न च विशेषवचनाभावाल्लोकविद्विष्टत्वाच्चाऽत्र दोषो न तत्रेति वाच्यम् । तस्याऽत्रापि तौल्यादिति । **पापमपीति** । "तपो न कल्कोऽध्ययनं न कल्क" इत्यादिवाक्येभ्य इत्यर्थः । **एतेनेति** । लौकिकत्वादिस्थापनेन । द्वितीयं वक्तु तदधिकार्यादिकमाहुः—**तुरीयेत्यादि** । तथाच ज्ञानोदयहेतुचित्त-

१ ज्ञानोदयहेतुरिति सविसर्गं पाठ क्वचित्. २ गङ्गास्पर्श इत्यनेनेति ख. ३ नद्यात्मकतत्स्पर्श इत्यर्थ इति ख. ४ तदर्थे स्पर्शे इति ख. ५ तपो न कल्कोऽध्ययनम् । कल्कोऽस्त्री शमलैनसोरित्यमर । कल्क इत्यादि वाक्येभ्यस्तथेत्यर्थ इति क. ६ ज्ञानोदयहेतुचित्तशुद्धिहेतुक्रयतिरनेत्यादि ख.

हि । श्रीभागवतसहस्रनामादिश्रवणकीर्त्तनयोः फलत्वेन हि चत्वारोऽप्यर्था उच्यन्ते । तत्र त्रिवर्गकामेन क्रियमाणः श्रवणादिः कर्ममार्गीय एव । तत्राप्यर्थाद्यर्थिभिर्विहितत्वेन कृतश्चेत्तदा स तथा। वृत्त्यर्थं चेत् कृषिवल्लौकिक एव । शौचार्थिगङ्गास्पर्शवच्च। न हि तस्य मलनिवृत्त्यतिरिक्तो धर्म उत्पद्यते । प्रत्युत निषिद्धाचरणात्पापमपि । एतेन विहितजातीयं कर्म यथाकथञ्चित्कृते-

---

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

र्णोदाहरणमाहुः—तथाहीति । तदा स तथेति । स श्रवणादिस्तथा पूर्वोक्तकर्ममार्गीय एवेत्यर्थः । यद्यपि त्रिवर्गमध्ये अर्थार्थित्वमुक्तमेव तथापि धर्मराहित्यपूर्वकत्वकथनाय पुनर्वचनम् । वृत्त्यर्थमिति । वृत्तिर्जीवनम् । एतेनेति । भावभेदात्फलभेदकथनेनेत्यर्थः । साक्षादेव वैदिककर्मणः फलो-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम्।

मूले अर्थाद्यर्थिभिरित्यनेनाऽऽदिपदेन कामपूजे संगृह्येते । वृत्त्यर्थमिति वृत्तिपदमन्यविहितरीतिककामपूजयोरुपलक्षकम् । गङ्गास्पर्शेति । नद्यात्मकगङ्गास्पर्शो न तूद्धृतजलस्पर्शः । उद्धृतजलस्य तदर्थं स्पर्शे दोषस्य स्मृत्यगोचरत्वादिति स्मार्त्ताः । भगवद्भक्तास्तूद्धृतेऽपि तादर्थ्ये दोषं मन्यन्ते । अन्यथा
णामृतेनाऽपि तथा करणे दोषाभावप्रसक्तेः । न च विशेषवचन
द्दिष्टत्वाद्वाऽत्र दोषो न तत्रेति वाच्यम् । तत्राऽत्राऽपि
मपीति । "तपो न कल्कोऽध्ययन न कल्"
टीकायाम्—साक्षादित्यादि । तथा

मुक्तफलायेति निरस्तम् । तुरीयाश्रमे ज्ञानोदयहेतुचित्तशुद्धिहेतुत्वेन क्रियमाणः श्रवणादिर्ज्ञानमार्गीयः । "यथा यथाऽऽत्मा प-

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

दयान्न कृतिमात्रेण साफल्यमित्यर्थः । **तुरीयाश्रम इति** । सर्वत्र कृतिसा-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

दुर्घटं चेत्तादृशपूजायामपि तादृशत्वाद्भक्तित्वं सुतरां दुर्घटमित्यर्थः । मूले कर्ममार्गवज्ज्ञानमार्गेऽपि परम्परायास्तुल्यत्वात्तदीयस्वरूपमाहुः—**तुर्याश्रम इत्यादि । यथा यथाऽऽत्मेति** । आत्मा अन्तःकरणम् । वाक्योत्तरार्द्धं तु— "तथा तथा पश्यति वस्तु सूक्ष्मं चक्षुर्यथैवाऽञ्जनसम्प्रयुक्तमि"ति । इदं वाक्यमेकादशीयचतुर्दशाध्यायस्थम् । तत्राऽऽरम्भे—"भवतोदाहृतः स्वामिन् भक्तियोगोऽनपेक्षितः । निरस्य सर्वतः सङ्गं येन त्वय्याविशेन्मन"इति प्रश्ने

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

त्वात्तथेत्यर्थः । अर्थादीत्यादिपदेन कामः पूजा च संगृह्यते । वृत्त्यर्थमिति वृत्तिपदमविहितरीतिकपूजाकामयोरप्युपलक्षकम् । गङ्गास्पर्शवदित्यत्र गङ्गास्पर्शो नद्यात्मकैतत्स्पर्शः । न तूद्धृततज्जलस्पर्शोऽपि । उद्धृतजलस्य तदर्थं स्पर्शे दोषस्य स्मृत्यनुक्तत्वादिति स्मार्त्ताः । भगवद्भक्तास्तु तदर्थमुद्धृतेऽपि जले दोषं मन्यन्ते । अन्यथा चरणामृतेनाऽपि तथा करणे दोषाभावप्रसक्तेः । न च विशेषवचनाभावाल्लोकविद्विष्टत्वाच्चाऽत्र दोषो न तत्रेति वाच्यम् । तस्याऽत्रापि तौल्यादिति । **पापमपीति** । "तपो न कल्कोऽध्ययनं न कल्क" इत्यादिवाक्येभ्य इत्यर्थः । **एतेनेति** । लौकिकत्वादिस्थापनेन । द्वितीयं वक्तुं तदधिकार्यादिकमाहुः—**तुरीयेत्यादि** । तथाच ज्ञानोदयहेतुचित्त-

१ ज्ञानोदयहेतुरिति सविसर्गः पाठः क्वचित्. २ गङ्गास्पर्श इत्यत्रेति ख. ३ नद्यात्मकतत्स्पर्श इत्यर्थ इति ख. ४ तदर्थं स्पर्शे इति ख. ५ तपो न कल्कोऽध्ययनम् । कल्कोऽस्त्री शमलैनसोरित्यमरः । कल्क इत्यादि वाक्येभ्यस्तथेत्यर्थ इति क. ६ ज्ञानोदयहेतुचित्तशुद्धिहेतुकयतिरत्रेत्यादि ख.

रिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैरि"त्यादिवाक्यैः। सा-
क्षान्मोक्षसाधनत्वेन तान्त्रिकदीक्षापूर्वकं विहितत्वेन क्रियमाणः

---

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

रूप्येऽपि साधनदशायां न पर्यवसानमिति तात्पर्यम् । साक्षादिति । ज्ञाना-

श्रीमत्पुरुषोत्तमप्रणीत तीर्थम् ।

सर्वसङ्गनिरासस्य तुर्याश्रमधर्मत्वात्तुरीयाश्रमलाभ । सर्वसङ्गनिरासोपलक्षक वा
तुरीयाश्रमपदम् । तुरीयाश्रम इत्यादिनिरूपणस्य तात्पर्यं टीकायामाह —
सर्वत्रेत्यादि । कृतिसारूप्येऽपि साधनदशायामिति । साधनदशा-
या कृतिसारूप्येऽपीत्यर्थ । तात्पर्यमिति । प्रपञ्चकतात्पर्यम् । साक्षादिति ।

श्रीमत्पुरुषोत्तमप्रणीतो विवेक ।

शुद्धिकामो यतिरत्राऽधिकारीति तेन श्रवणादेर्भेद इत्यर्थ । प्रमाणमाह —
यथेत्यादि । आत्मा अन्त करणम् । वाक्योत्तरार्द्धं तु "तथा तथा पश्यति
वस्तु सूक्ष्म चक्षुर्यथैवाऽञ्जनसम्प्रयुक्तमि"ति । वाक्य त्वेकादशीयचतुर्दशाध्या-
यस्थम् । तत्र सन्दर्भारम्भे "भवतोदाहृत स्वामिन् भक्तियोगोऽनपेक्षित ।
निरस्य सर्वत सङ्ग येन त्वय्याविशेन्मन" इति प्रश्नवाक्योक्तस्य सर्वसङ्गनिरा-
सस्य तुरीयाश्रमधर्मत्वात्तल्लाभ । सर्वसङ्गनिरासोपलक्षक वा तुरीयाश्रमपदम् ।
तृतीयमाह —साक्षादित्यादि । अत्रेद बोध्यम् । एकादशस्यैकादशाध्याये
पूर्वं "आत्मारामोऽनया वृत्त्ये"त्यतेनाऽऽत्मारामधर्माननुक्त्वा तदर्थं सर्वगतस्य
मनस स्वस्मिन्नर्पण चोक्त्वा तत्राऽनधिकारे "यद्यनीशो धारयितुमि" त्यादि-
त्रयेण निरपेक्षकर्मणा शुद्धसत्त्वस्य भक्तिमुक्त्वा "सत्सङ्गलब्धया भक्त्या मयि
मां य उपासिता । स वै मे दर्शित सद्भिरञ्जसा विन्दते पदमि"ति स्वपदप्राप्ति-
रुक्ता । ततो "भक्तिस्त्वय्युपयुज्येत कीदृशी सद्भिरादृते" ति प्रश्ने "मल्लिङ्ग-
मद्भक्तजनदर्शनस्पर्शनार्चनमि"त्याद्यष्टभि पूर्वोक्तोपासनाशेषभक्तिकथने "वै-
दिकी तान्त्रिकी दीक्षा मदीयव्रतधारणमि"त्यनेन वैदिकी तान्त्रिकी दीक्षा

---

१ वाक्योत्तरार्द्ध लिति ख २ त्यपमञ्जसेति ख ३ भक्तिस्त्वय्युपयुज्यतेति ख

श्रवणादिरुपासनामार्गीयः । अयमेव वैष्णवमार्ग इत्युच्यते ।

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

व्यवधानपूर्वकशुद्धभावनामात्रेणेत्यर्थः । पञ्चरात्रपुराणादिष्वयमेवाऽऽचार्यानुग्र-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

अत्रेदं बोध्यम् । एकादशस्यैकादशाध्याये पूर्वम्—"आत्मारामोऽनया वृत्त्ये" त्यन्तेनाऽऽत्मारामधर्मानुक्त्वा तदर्थं सर्वगस्य मनसः स्वस्मिन्नर्पणं चोक्त्वा तैद-नधिकारे"यद्यनीशो धारयितुमि"त्यादित्रयेण निरपेक्षकर्मणा शुद्धसत्त्वस्य भक्तिमुक्त्वा "सत्सङ्गलब्धया भक्त्या मयि मां य उपासिता । स वै मे दर्शितं सद्भिरञ्जसा विन्दते पदमि"ति स्वपदप्राप्तिरुक्ता । ततो "भक्तिस्त्वय्युपयुज्येत कीदृशी सद्भिरादृते"ति प्रश्ने "मल्लिङ्गमद्भक्तजनदर्शनस्पर्शनार्चनमि"त्याद्यष्ट-भिः पूर्वोक्तोपासनाद्येपभक्तिकथने वैदिकी तान्त्रिकी दीक्षा मध्ये गणिता । एवँमुपसंहारे च—"इष्टापूर्तेन मामेवं यो यजेत समाहितः । लभते मयि

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

मध्ये गणिता । उपसंहारे च "इष्टापूर्तेन मामेवं यो यजेत समाहितः । लभते मयि सद्भक्तिं मत्स्मृतिः साधुसेवये" त्युक्तम् । एवं सत्युपक्रमे सत्सङ्ग-लब्धयेति वाक्ये यदुक्तं तदत्र साक्षान्मोक्षसाधकत्वेनेत्यनेनोक्तम् । या पुनर्मध्ये तान्त्रिकी दीक्षोक्ता सा तान्त्रिकी(?)दीक्षापूर्वकमित्यनेन स्मारिता । यत्पुनरन्ते यो यजेत समाहित इत्यनेन विध्यनुवाद उक्तः स विहितत्वेनेत्यनेन स्मारि-तः । उपक्रमे उपासितेति कथनादुपासनामार्गीयत्वमेतँस्याऽत्रोक्तम् । अतः सर्वमिदं भगवदुक्तमेव प्रमेयम् । तथापि तत्र वैदिक्या दीक्षाया भक्तिरूपफलस्य च कथनेन तत्प्रावाहिकभक्तिमर्यादाभक्तिसङ्कीर्णमिति तदत्र प्रमाणत्वेन नोदा-हृतम् । अत्र विविक्ततत्कथनस्याऽभिसंहितत्वादिति । **अयमिति** । तान्त्रिक-

१ तान्त्रिकमार्ग इति क्वचित्. २ ज्ञानाव्यवधानपूर्वकमिति ख. घ. ज्ञानाद्यवधान-पूर्वकमिति ग. ३ तत्राऽनधिकारे इति ग. ४ एवमिति नास्ति ख. ५ एतस्या-मुक्तमिति क.

विष्णुधर्मेष्वेव निष्ठावत्त्वात् । मुक्तिसाधनत्वप्रतिपादकवाक्य-

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

हलब्धो वैष्णवधर्मपरो वैष्णवमार्ग उच्यते । मुक्तिसाधनेति । "चतुर्विधा

श्रीमत्पुरुषोत्तमप्रणीत तीर्थम् ।

सद्भक्ति म स्मृति साधुसेवये''त्युक्तम् । एव सत्युपक्रमे सत्सङ्गलब्धयेति वाक्ये यदुक्त तन्मूले साक्षान्मोक्षसाधकत्वेनेत्यनेनोक्तम् । तदेव टीकाया ज्ञानायव-धानेत्यादिना व्याख्यातम् । या पुनर्मध्ये तान्त्रिकी दीक्षोक्ता सा मूले तान्त्रिकी (¹)दीक्षापूर्वकमित्यनेन स्मारिता । य पुनरन्ते यो यजेतेति विध्यनुवाद उक्त स मूले विहित त्वेनेत्यनेनोक्त । उपक्रमे उपासितेति समाहित इति च कथ-नादुपासनामार्गीय वमत्रोक्तम् । अत सर्वमतदेकादशीयमेव प्रमेय भगवदु-क्तत्वेन सन्देहाभावायोक्तमिति ज्ञेयम् । एतस्य वैष्णवमार्गत्वे युक्तिमुक्त्वा प्रमाण वदन्तीत्याशयेनाऽऽह —पञ्चरात्रेत्यादि । ननु मुक्तिप्रतिपादक-वाक्याना चेदुपासनामार्गीय श्रवणादिविषयत्वदा "अर्चायामेव हरय" इत्यादे को वा विषय । तत्र भक्तपदेन कर्मज्ञानमार्गीययो प्राकृतपदेन भक्तिमार्गीयस्य व्यावर्त्तनात् । मुक्त्यप्रतिपादनेनाऽस्याऽपि वक्तुमशक्यत्वाच । इत्याकाङ्क्षाया तादृग्वाक्योक्तसंग्रहाय वदन्तीत्याशयेनाऽऽह —चतुर्विधा इत्यादि । अस्मिन् वाक्ये—आर्त्त प्रतिष्ठाहीनो भ्रंष्टैश्वर्यस्तत्प्राप्तिकाम । अर्थार्थी अप्राप्तैश्वर्यविषयतया ऐश्वर्यकाम । एतयोर्गुणमात्र भिन्नमधिकारस्त्वे-क एव । जिज्ञासु प्रकृतिवियुक्तात्मस्वरूपावाप्तीच्छु । ज्ञानी तु प्रकृतिवियु-क्तात्मस्वरूपे अपर्यवस्यन् भगवन्त प्रेप्सुर्भगवल्लमेव परमप्राप्य मन्वान इति

श्रीमत्पुरुषोत्तमप्रणीतो विवेक ।

दीक्षाविशिष्टवात्पञ्चरात्रादिदक्षिणागमोक्त । विष्णुधर्मेषु निष्ठावत्त्व वाम-वैष्णवेष्वप्यस्तीति तन्निरासायाऽऽह —मुक्तीत्यादि । "मोक्षमिच्छेज्जनार्द-

१ प्राकृतपदेन नाऽस्यापि वक्तुमशक्यत्वाच्चत्वात्वाद्वाह्यामिति ख २ पञ्चरात्राद्या गमोक्त इति ग ३ वाममाम वैष्णवेष्वपास्त्यादि क

रेवमवसीयते । "अर्चायामेव हरय" इत्यादिवाक्यानामयमेव

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

भजन्ते मां जनाः सुकृतिनोऽर्जुन । आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभे"त्यत्राऽऽर्त्ताधिकारकभजनस्य सर्वसाधारण्येन प्रावाहिकत्वं वक्तुं तल्लक्षणपूर्वकं स्वरूपमनुवदन्ति—अर्चायामेवेति । भक्तिमार्गीयेति । अत्र

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम्।

रामानुजाचार्याः । श्रीधरीये तु—आर्त्तो रोगाद्यभिभूतः । जिज्ञासुरात्मज्ञानेच्छुः । अर्थार्थी इह परत्र वा भोगसाधनभूतार्थलिप्सुः । ज्ञानी आत्मविदित्युक्तम् । मधुसूदनीये तु द्रौपद्यादयो मुचुकुन्दादयो विभीषणादयः सनकादयोऽत्र चतुर्विधोदाहरणत्वेनाऽप्युक्ता इति विशेषः । तदेतन्मतं नाऽस्माकं रोचते । आद्यस्य आर्त्तार्थार्थिनोरधिकारैक्ये पृथङ्निर्देशप्रयोजनोक्तिशून्यतया असामञ्जस्यात् । द्वितीयस्य क्रमविरोधेन तथात्वात् । तृतीयस्योदाहरणेऽपि विरोधाद्येति । अतोऽर्थार्थिपदेन "अकामः सर्वकामो वा मोक्षकाम उदारधीः । तीव्रेण भक्तियोगेन यजेत पुरुषं परमि"ति द्वितीयस्कन्धोक्तो भगवत्सेवोपयोग्यर्थार्थी ग्राह्यः । तथा सत्यार्त्तो जघन्यत्वेन शिष्यते । तथाचाऽऽर्त्तः

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः।

नादि"ति वाक्यान्मुक्तिदोऽत्र विष्णुरभिप्रेयते । न तु शक्तिशेषः प्रेतरूपः । तेन तद्धर्मनिष्ठत्व एव वैष्णवमार्गत्वमन्यथा शाक्तत्वमित्यर्थः । ननु यत्र मुक्तिर्नोक्ता "अर्चायामेव हरये पूजां यः श्रद्धयेहते । न तद्भक्तेषु चाऽन्येषु स भक्तः प्राकृतः स्मृत" इत्यादौ तत्र प्रतिमायामेव तस्य भगवद्बुद्ध्याऽन्यत्र भावाभावेन शाक्तिनित्यस्याऽशक्यवचनत्वाद्भक्तेषु भावाभावेन भक्ताभक्तयोस्तौल्यसूचनेन च भक्तिमार्गीयत्वस्याऽप्यशक्यवचनत्वादर्चाहर्योर्भेदनिर्देशेन पातिनत्यधर्मत्वस्याऽपि तथात्वात्कुत्र निवेश इत्याकाङ्क्षायामाहुः—अर्चायामित्यादि ।

१ तस्य प्रतिमायामेव भगवद्बुद्धेति रा. २ अन्यत्र तु भावाभावेनेति रा.

क्रियमाणः श्रवणादिर्भक्तिमार्गे मर्यादाभक्तिरित्युच्यते। "श्रद्धाऽमृतकथायां म" इत्युपक्रम्य "एवं धर्मैर्मनुष्याणामुद्धवाऽऽत्मनिवेदिनाम् । मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्याऽवशिष्यते"

---

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

ति । प्रेमात्मकभक्तिसाधनत्वेने(?)त्यर्थः । उभयोः साधनभावमुपपादयन्ति—

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

स्वरूपमाहुरित्यर्थः । **साधनभावमिति** । साध्यसाधनभावम् । तथाच मूलो-

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

दीनां वैदिकी बोध्या । पूर्वोक्तस्वारस्यात्[1] । लोकप्रवाहे यथा मुक्तिः फलत्वेनाऽभिमता तथाऽत्राऽपि । अतोऽस्य प्रावाहिकत्वं ज्ञेयम् । पूर्वत्र तु कामनादिभेदादधिकारिभेदो बोध्यः । पञ्चममाहुः—प्रेमेत्यादि । परतः पुरुषार्थत्वेन साधनकरणादस्य मर्यादाभक्तित्वम् । अत्रोक्तैकादशीयसन्दर्भे आत्मनिवेदनपूर्वकमेव श्रद्धादीनां कथनात्तत्पूर्वककथाश्रद्धा, निरन्तरकीर्त्तनं, पूजानिष्ठा, स्तुतिकरणकस्तवनं, परिचर्यादरः, साष्टाङ्गप्रणामः, भक्तेष्वधिकपूजा, सर्वभूतेषु भगवद्भावः, भगवदर्थं लौकिकी क्रिया, लौकिकगाथया भगवद्गुणकथनं, च भगवति मनोर्पणं, सर्वकामत्यागः, भगवद्भजनार्थं तद्विरोधिनामर्थभोगसुखानां त्यागः, इष्टदत्तहुतजप्तादीनां वैदिकानां व्रततपआदीनां स्मार्त्तानां च भगवदर्थत्वमित्येतेषां करणं मर्यादाभक्तिरित्यर्थः । अत्रोपक्रमे "पुनश्च कथयिष्यामि मद्भक्तेः कारणं परमि"ति परमकारणत्वप्रतिज्ञानादस्य प्रकारस्या[2]ऽन्येभ्य उत्कर्षः । समाप्तौ च "मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्याऽवशिष्यत"इति फलोत्कर्षकथनाच्च । परत्वं च शीघ्रमव्यभिचारेण जनकत्वम् । किञ्च । अत्र द्विविधाया अपि दीक्षाया अनुक्तत्वात्कथयिष्यामीति प्रतिज्ञानाच्च स्वकृ[3]तोपदेशपक्ष एव भगव-

---

१ पूर्वोक्तस्वारस्यात्तु इति क. २ प्रकरणस्येति ख. ३ तेन स्वकृतोपदेशपक्ष एवेति ख.

"भक्त्या सञ्जातया भक्त्ये"त्यादिवाक्यैस्तत्साधनत्वं ज्ञेयम् । स्ने-

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

श्रद्धामृतकथायामित्यादिना । तत्साधनत्वं स्नेहसाधनत्वमित्यर्थः । फलदशापन्नभक्तिस्वरूपमाहुः—स्नेहोत्पत्तीति । स्वभावतः सर्वेन्द्रियवृत्तीनां

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

त्वैकादशीयोनविंशवाक्ये आत्मनिवेदनपूर्वकमेव कथाश्रद्धादीनां कथनात्तत्पूर्वकं कथाश्रद्धा, निरन्तरकीर्तनं, पूजानिष्ठा, स्तुतिकरणकस्तवनं, परिचर्यादरः, साष्टाङ्गप्रणामः, भक्तेष्वधिकपूजा, सर्वभूतेषु भगवद्भावः, भगवदर्थं लौकिकी क्रिया, लौकिकगाथया भगवद्गुणकथनं गानं च, भगवति मनोर्पणं, सर्वकामत्यागः, भगवद्भजनार्थं तद्विरोधिनामर्थभोगसुखानां त्यागः, इष्टदत्तहुतजप्यादीनां व्रततपआदीनां स्मार्त्तानां च भगवदर्थत्वमित्येतेषां करणं मर्यादाभक्तिरित्यर्थः । अत्र सन्दर्भे "पुनश्च कथयिष्यामि मद्भक्तेः कारणं परमि"त्यु-

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

तोऽभिप्रेत इति ज्ञायते । तथा सति एवं धर्मैरिति वाक्यगतं मयीति पदं [1]पूर्वार्द्धेऽपि युज्यमानं कृष्ण एव भगवति [2]संप्रदायपरीतिकात्मनिवेदनोपदेशं गमयति । गारुडे तु "सकृदेव प्रपन्नो यस्तवाऽस्मीति च यो वदेत् । अभयं सर्वभूतेभ्यो ददात्येतद्व्रतं हरेरि"ति विष्णुभक्तध्याये कण्ठत एवोक्तम् । गीतायामेकादशे च शरणगमनोपदेशाच्च सा ततः पूर्वा कक्षा । [3]तथा सति तदुभयोपदेशपूर्वकं तयाँ क्रियमाणः श्रवणादिर्मर्यादाभक्तिरिति सिध्यति । उपदिश्यमानमन्त्रस्वरूपादिकं मया [4]उपदेशवादे प्रपञ्चितमिति नाऽत्र पुनरुच्यते । उक्तसन्दर्भे एवं धर्मैरिति धर्मपदात् स्नेहसाधनभूतेषु श्रवणादिषु भक्तित्वं न युक्तमिति शङ्कानिरासाय वाक्यान्तरमाहुः—भक्त्येत्यादि । तथाचाऽत्र म-

१ पूर्वार्द्धे युज्यमानमपीति ग. २ गात्मप्रदादिकरीतिकात्मनिवेदनोपदेशमिति ग. ३ तथेति नास्ति ग. ४ अस्माभिरुपदेशवादे इति ग.

होत्पत्त्यनन्तरं स्वव्यमनतः स्वतन्त्रपुरुषार्थत्वेन क्रियमाण उत्तमः पुष्टिभक्तिरूपः। "मत्सेवया प्रतीतं च सालोक्यादि चतुष्टयम्। ने-

---

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

स्वरूपैकविषयत्वेन कामिन्यासक्तमनस इव यत्किञ्चित्क्रियमाणमपि तद्विषयकमेव

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

पक्रमे परमकारणत्वकथनादस्य प्रकारस्याऽन्यस्मादुत्कर्षः । समासौ "मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्याऽवशिष्यत" इति फलोत्कर्षकथनाच्च । किञ्च । अत्र द्विविधाया अपि दीक्षाया अनुक्तत्वात्कथयिष्यामीति प्रतिज्ञानाच्च स्वकृतोपदेशपक्ष एव भगवतोऽभीष्ट इति ज्ञायते । तथा सति एवं धर्मैरिति वाक्यगत मयीतिपदं पूर्वार्द्धेऽपि युज्यमानं कृष्ण एव भगवति संप्रदायरीतिकात्मनिवेदनोपदेशं गमयति। गारुडे च "सकृदेव प्रपन्नो यस्तवाऽस्मीति च यो वदेत् । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं हरेरि"ति विष्णुभक्तयध्याये वाक्याद्गीतायामेकादशे च शरणगमनोपदेशात्तदुभयोपदेशपूर्वकं तथा क्रियमाणः श्रवणादिर्मर्यादाभक्तिरूप इति सिद्धयति। उक्तसन्दर्भे एवं धर्मैरिति धर्मपदात्स्नेहसाधनभूतेषु श्रवणादिषु भक्तित्व न युक्तमिति शङ्कानिरासाय वाक्यान्तरमाहुर्मूले—**भक्तयेत्यादि** । तथाचाऽत्र प्रेमभक्तिसाधनेषु भक्तिपदप्रयोगात्तत्र धर्मपदं भगवद्धर्मपरमिति न तेषु भक्तित्वं हीयत इत्यर्थः । पुष्टिभक्तिस्वरूपं विवृण्वन्ति—**फलदशापन्नेत्यादि** । एवं मूले अत्र

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

क्तिसाधने भक्तिपदप्रयोगात्तत्र धर्मपदं भगवद्धर्मपरमिति न श्रवणादिषु भक्तित्वहानिरित्यर्थः । अस्मिन् प्रकारे कामनाभेदादधिकारिभेदः । षष्ठमाहुः—**स्नेहेत्यादि** । उत्तमत्वे गमकमाहुः—**मत्सेवयेत्यादि** । सेवापदेन सातत्या-

---

१ भक्तिरूपस्नेहोत्पत्त्यनन्तरमिति क्वचित्. २ अनुक्तत्वादिति ख. ३ ददाम्येतदिति ख. ४ तत्तदुपदेशपूर्वकमिति क. ५ धर्मैरिति पदमिति ख. ६ अधिकारभेद इति क. ७ सप्तमाहुरिति क. ८ मत्सेवयेतीति ख.

च्छन्ति सेवया पूर्णाः कुतोऽन्यत्कालविलुतम्" "नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः" "महतां मधुद्विट्सेवानुरक्तमनसामभवोऽपि फल्गुः" "नारायणपरा लोके न कुतश्चन

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

भवत् पर्यवस्यतीत्यतः स्वतन्त्रपुरुषार्थत्वम् । अग्रे फलाकाङ्क्षाविरहादुत्तमत्वं च ।

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम्।

वदाम इत्यारभ्य तथात्वं ज्ञेयमित्यन्तेन श्रवणादीनामनेकविधत्वमुपपादितम् ।

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः।

भीक्ष्ण्यान्यतरपूर्वकः कायिकव्यापारविशेष उच्यते । स्त्रीसेवा औषधसेवेत्यादिप्रयोगात् । स चाऽत्र प्रकरणबलात्परिचर्यारूप एव । तस्याथ कायक्लेशाधायकत्वेन स्वतः पुरुषार्थत्वाभावेऽप्यत्र पूर्णत्वादिकथनात्स्नेहात्मकमनोवृत्तिपूर्वकत्वादिकं लभ्यते । लोके तथा दर्शनात् । श्रवणादीनां त्वत्र स्नेहसिद्ध्या अर्थाल्लाभः । एतद्बोधनायाऽत्र इत्यादीत्यादिपदम् । अत्र कामनाभावादधिकारिभेदः । एवमधिकारिभेदेन श्रवणादीनामनेकविधत्वमुपपादितम् । तत्राऽभक्तकृते श्रीभागवतश्रवणादौ भक्तित्वाभावेन द्वारलोपात्तद्विधौ भगवत उद्देश्यत्वं निवर्तेत । यूपीयात्रश्चनस्याणुत्वरूपद्वारलोपात्स्थाण्वाहुतिर्यथा खले वाल्या निवर्तते । तदिदं दशमस्य प्रथमे पादे स्थितम् । कर्ममार्गीयश्रवणादिषु त्वेंप्राप्तिरेवेति भेदः । न च तद्विधेर्भक्तिशास्त्रीयत्वात्कथं न तेषां भक्तित्वमिति शङ्क्यम् । तच्छास्त्रीयत्वस्य तत्राँऽस्वतन्त्रत्वात् । अन्यथा "योगास्त्रयो मया प्रोक्ताः" "भक्तियोगश्च योगश्च मया मानव्युदीरित" इत्यादिवाक्यबाधापत्तेः। अधिकारिणो बलिष्ठत्वाच्च । अन्यथा मदर्पणमित्यादिवाक्यविरोधापत्तेः ।

१ लोका इत्यपि क्वचित्. २ कामनाभावादिना अधीकारीत्यादि रा. ३ तत्र भक्तकृते श्रीभागवतश्रवणादौ पुष्टित्वाभावेन द्वारलोपात्तद्विधौ भगवत उपदेश्यत्वं निवर्तेत इति ख. ४ प्राप्तिरेवेति भेद इति ग. ५ पुष्टिशास्त्रीयत्वकथनादिति रा. ६ पुष्टित्वमिति ख. ७ तत्राऽतन्त्रत्वादिति रा ग. ८ योगश्चेति नास्ति ख.

विभ्यति । स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः” इत्यादिवाक्यैस्तथात्वं ज्ञेयम् । तेन भक्तिपदस्य शक्तिः स्नेह एव । श्रवणादिषु

---

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

दोषमात्रस्याऽऽशङ्कितुमप्यशक्यत्वादित्यर्थः । **तथात्वमिति** । उत्तमत्वमित्यर्थः । **तेनेति** । फलतारतम्यविचारेणेत्यर्थः । मुख्याऽभिधानशक्तिर्भक्तिपदनिष्ठा स्नेहमेव प्रत्याययति । न पूर्वोदाहृतत्रितयम् । अतोऽत्र वृत्तिः शक्ति-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

अतः परं पूजायां भक्तित्वनिवृत्तये भक्तिपदशक्तिं निर्धारयन्तीत्याशयेन तेनेत्यादि भाक्त इत्यन्तं मूलं विवृण्वन्ति—**फलेत्यादि** । तत्र सिद्धमाहुः—**मुख्येत्यादि** । **त्रितयमिति** । कर्मज्ञानोपासनाख्यम् । **अन्यत्रेति** ।

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

अतस्तत्र विधेराभासरूपतैव यथा दाम्भिकादाविति बोध्यम् । त्रिवर्गकामिना भक्तेन कृते तु भक्तित्वानोद्देश्यत्वनिवृत्तिः । परन्तु तादृशाधिकारस्य जघन्ये तत्र मर्यादया वरणं यथाधिकारं ज्ञेयम् । एवमेव प्रवाहिकभक्तावपि । तथा सति भक्तिशास्त्रोक्तेष्वपि श्रवणादिषु भावभेदेन क्वचिद्भक्तित्वं क्वचिन्नेति प्रकरणापेक्षयाऽधिकारस्यैव बलिष्ठत्वान्नवविधभक्तौ गणितस्याऽप्यर्चनस्य भक्तित्वं न नियतमिति प्रकरणबलेन पर्यवस्थानमसङ्गतमिति समाधानं सिद्धम् । नन्वेवं चेत्तर्हि भक्तिपदस्य शक्तिः क्वेति वक्तव्यम् । नो चेदगत्या एतेष्वेव शक्तिरादरणीया । तथा सति पूर्वोक्तं सर्वमपार्थमित्याशङ्कायामाहुः—**तेनेत्यादि । तेनेति ।** धात्वर्थविचारेण सेवालाभेऽपि पूर्णादिपदान्यथानुपपत्तिबलात्स्नेहलाभेन । पञ्चरात्रे तु “स्नेहो भक्तिरिति प्रोक्त” इति कण्ठत एवोक्तम् । शाण्डिल्यसूत्रे च “अथाऽतो भक्तिजिज्ञासेति” प्रतिज्ञाय “सा पराऽनुरक्तिरीश्वर” इत्युक्तम् । **श्रवणादिष्विति** । नैरपेक्ष्यपूर्वकश्रवणादिषु । भाक्त इति कथनेन

---

१ मुख्याऽभिधाशक्तिरिति ध. २ क्वचिद्भक्तित्वं सिध्यति क्वचिन्नेतीति ख. ३ भक्त्यार्थविचारेण सेवालाभेऽपि पूर्णतादिपदान्यथानुपपत्तिबलात्स्नेहलाभेनेति ख.

तद्धेतुत्वेन तत्प्रयोगो भाक्तः। अत एव "सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः" इति लक्षणमुक्त्वा "स एव भक्तियोगाख्य" इति लक्ष्यमुक्तम् । अन्यथाऽऽख्यापदमनर्थकं स्यादेवकारश्च। एवं सति पूर्वोक्तेष्वौ-

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

रेव । अन्यत्र लक्षणा गौणी च । हेतुहेतुमद्भावस्य संबन्धस्य विद्यमानत्वादित्यर्थः । **अत एवेति** । यतोऽत्रैव मुख्यत्वमत एव तदुत्तरभाविसालोक्यादिपञ्चविधमुक्तीनामप्राप्तत्वेनाऽऽकाङ्क्षाविषयत्वमुचितमप्यनिर्वाच्यानुभवैकवेद्यभजनरसास्वादमुदिता नेच्छन्ति । एतदनन्तरमन्यफलेच्छोदये उच्यमाने पूर्वोक्तत्रितयवदेतस्याऽप्यन्यशेषत्वं स्यादित्यर्थः । सालोक्यं समाने लोके वैकुण्ठे स्थितिः । सार्ष्टिः समानैश्वर्यम् । सामीप्यं पार्षदत्वम् । सारूप्यं सौन्दर्याद्यविशेषप्रतीतिः । एकत्वं स्वरूपे प्रवेशः । **अन्यथेति** । यदि स्नेहे मुख्यत्वं नोच्येत तदा लक्ष्यलक्षणकथनमन्ययोगव्यवच्छेदश्च नोपपद्येतेत्यर्थः । पूर्वोक्तेषु श्रवणा-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

श्रवणादिषु । **संबन्धस्येति** । सादृश्यस्य । स्नेहे भक्तिपदप्रयोगो मुख्य इत्यत्र प्रमाणं वदन्तीत्याशयेनाऽत एवेति प्रतीकं धृत्वा व्याकुर्वते—**यत इत्यादि** । अन्यथेत्यादिनोक्तं तर्कं व्याकुर्वन्ति—**यदीत्यादि** । ननु यदि

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

पूर्वोक्तं पूजाया औपचारिकत्वं समर्थितम् । श्रवणादीनां लक्षणं तु श्रीधरीये—भगवद्वाचकपदवाक्यानां भगवति शक्तितात्पर्यनिर्धारः श्रवणम् । तादृशनिर्धारपूर्वकमुच्चारणं कीर्तनम् । तथैव स्वरूपचिन्तनं स्मरणम् । पादसेवनं परिचर्या । अर्चनं पूजनम् । वन्दनं कायवाङ्मनोभिः प्रह्वीभावः । दास्यं कर्मार्पणम् । सख्यं तद्विश्वासादि । आत्मनिवेदनं देहसमर्पणम् । यथा विक्रीतस्य गवाश्वादेर्भरणपालनादिचिन्ता न क्रियते तथा देहं तस्मै समर्प्य तच्चिन्तावर्जनमिति निरूपितम् ।

१ भक्तेरिति क्वचित्. २ सबन्धसादृश्यस्येति क. ३ पूर्वोक्तपूजायामौपचारिकत्वमिति ख.

पचारिको भक्तिपदप्रयोग इति ज्ञापितं भवति । स्नेहवशेन क्रियमाणास्ते स्नेहमध्यपातिन एव । अथवा । साक्षात्पुरुषोत्तमप्रापकत्वेन विहितत्वं भक्तिपदप्रवृत्तिनिमित्तं श्रवणादिषु भिन्नम् ।

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

दिष्वित्यर्थ । यद्यपि स्नेहस्याऽऽन्तरत्वाच्छ्रवणादीनां बाह्यत्वान्नैकरूपत्वम् । तथापि स्नेहसम्पत्त्यनन्तर क्रियमाणास्तदन्त पातिनो भूत्वा तत्समानाख्या लभन्ते । गङ्गाप्रवाहान्त पातिवाह्योदकवदित्यर्थ' । भक्तिपदस्याऽनेकार्थत्वं वक्तु पदप्रवृत्तिनिमित्तभेदमाहु —अथवेति । विशेषवैयर्थ्यमाशङ्क्याऽऽहु'—

श्रीमत्पुरषोत्तमप्रणीत सौधम् ।

स्नेहातिरिक्ते भाक्तः प्रयोगस्तदा पुष्टिमार्गीयश्रवणादिष्वप्यविशेष इति शङ्कानिरासाय स्नेहवशेनेत्यादिना यदुक्त तद्व्याकुर्वते—यद्यपीत्यादि । तथा च यथा तत्र गङ्गापदस्य न लाक्षणिकत्वमेवमत्र भक्तिपदस्येति भावः । इदमत्राऽनेकार्थत्वस्याऽन्याय्यत्वमभिप्रेत्योक्तम् । तथापि वस्तुतो गौणी नाऽपैतीति भक्त्या ग्राह्य इत्यादौ युगपद्वृत्तिद्वयविरोधो न परिहर्तुं शक्य इति शङ्कायां तत्परिहाराय प्रकारान्तर वदन्तीत्याशयेनाऽऽहु'—भक्तिपदस्येत्यादि ।

श्रीमत्पुरषोत्तमप्रणीतो विवेक ।

तदस्माकमप्यविरुद्धम् । भक्तिपदस्य स्नेहे शक्तिं दृढीकर्तुं प्रमाणान्तरमाहु'—अतएवेत्यादि । आचार्यैस्तु "भक्तिपदस्य धात्वर्थः सेवा प्रत्ययार्थः प्रेमे"ति निबन्धे उक्तमुपपादितञ्च । अत प्रेम्णा सेवाया भक्तिपदशक्तिः पर्यवस्यति । तदेतदभिसन्धायाऽऽह.—स्नेहवशेनेत्यादि । इदमत्र "अन्यायश्चाऽनेकशब्दत्वमि(?)"ति न्यायानुरोधेनोक्तम् । तथापि "भक्त्याऽहमेकया ग्राह्य" इति वक्ष्यमाणवाक्ये युगपद्वृत्तिद्वयविरोध इत्यस्वरसेन पक्षान्तरमाहु:—अथवेत्यादि । विहितत्वमिति । "तस्माद्भारत सर्वात्मा भगवान् हरिरीश्वरः । श्रोत-

१ विशेषणेति घ.

न च तत्प्रापकत्वमेव तथेति वाच्यम् । द्वेषादेर्भगवदनुग्रहस्य च भक्तित्वापत्तेः । न च साक्षात्पदमनर्थकम् । विभूतिभजनकर्त्तुरपि तद्द्वारा तत्प्राप्तेः "यथाऽद्रिप्रभवा नद्यः पर्जन्यापूरिता विभो । विशन्ति सर्वतः सिन्धुं तद्वत्त्वां गतयोऽन्तत" इत्यादिप्रमाणसिद्धत्वेन [1]तद्द्वारकत्वात् । श्रीकृष्णस्नेहत्वमेव फलरूपायां तस्यां

---

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

न चेति । चैद्यादौ द्वेषादेरपि स्वरूपप्रापकत्वाल्लक्षणमतिव्याप्तं स्यादित्यर्थः । विशेषण[2]वैयर्थ्यमाशङ्क्याऽऽहुः—न चेति । साक्षात्पदादाने लक्षणस्य केवलव्यतिरेकित्वेनेतरभेदसाधने स्वरूपासिद्धत्वं स्यादित्यपि ज्ञेयम् । विवादास्पदं भक्तिः कर्मादिभ्यो भिद्यते । पुरुषोत्तमप्रापकत्वेन विहितत्वात् । यत्र[3] कर्मादिभेदाभावस्तत्र तत्प्रापकत्वे सति विहितत्वाभाव इत्यसिद्धः सर्वस्याऽपि [4]तत्परत्वा-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

केवलव्यतिरेकित्वेनेति । असाधारणधर्मत्वात्तथात्वेन । स्वरूपासिद्धत्वमिति । स्वेन व्याप्यत्वात्मकेन हेतुरूपेणाऽसिद्धत्वम् । व्याप्यत्वासिद्धत्वमित्यर्थः । तद्विशदयन्ति—विवादेत्यादि । यत्रेति । कर्मादिभेदा-

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

व्यः कीर्तितव्यश्च स्मर्त्तव्यश्चेच्छताऽभयमि"त्यादिवाक्यविहितत्वम् । अत्राऽभयस्य भगवत्प्रवेशरूपत्वात्साक्षात्पुरुषोत्तमप्रापकत्वं लभ्यते । तव्यस्याऽऽवश्यकार्थत्वस्वीकारेऽपि लोके विध्यर्थत्वप्रसिद्ध्या विधिलाभः । निबन्धे तथाऽङ्गीकारात् । वाक्यान्तरं वा विधायकं बोध्यम् । स्पष्टमन्यत् । सिद्धमाहुः—श्रीकृष्णेत्यादि । नन्वस्त्वनेकार्थत्वं भक्तिपदस्य तथापि भक्त्या प्राह्य इत्यादौ नोभ-

---

१ तद्द्वारकत्वादिति क्वचित्. २ पूर्वविशेषणेति घ. ३ यत्र कर्मादिभेदाभावस्तत्रेत्ययमंशो नास्ति क. ख. ग. ४ तत्परत्वापि तत्परत्वादेवेति इति ख. ५ हि वादेत्यादीति द्वयोरपि पाठः । युक्तस्तु प्रतीकानुरोधित्वादेवम् ।

तन्निमित्तमित्यनेकार्थो भक्तिशब्दः । प्रवृत्तिनिमित्तभेदेऽपि रवि-चन्द्रयोः पुष्पवच्छब्दवाच्यत्वमेकस्यामेवोक्तौ यथा तथा क्वचि-

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

देवेति यद्यप्यसिद्धिवारक विशेषण व्यर्थं मन्यन्ते तथापि मतभेदेन ज्ञेयम् । **प्रवृत्तीति** । पुष्पभेदात्तद्वत्त्वभेदेऽप्यावृत्तिमन्तरेण सकृदुच्चरितादर्थयोभयो प्रतीतिस्तथा पुरुषोत्तमविषयत्वेनाऽनुगतो व्यवहार सर्वत्रेत्यर्थं । **क्वचिदिति** ।

श्रीमत्पुरुषोत्तमप्रणीत तीर्थम् ।

भावस्तत्रेति शेषः (१) । **मन्यन्त इति** । सर्वस्य भक्तित्वोपगमेन मन्यन्ते । **मतभेदेनेति** । "योगास्त्रयो मये"ति वाक्यानुसारिणा सिद्धान्तिमतेने-त्यर्थ । एवमनेकार्थत्वे सति यत्सिद्ध तद्वदन्तीत्याशयेन प्रतीक धृत्वा व्याचक्षते—**पुष्पेत्यादि** । तथाच नै युगपद्वृत्तिद्वयविरोध इत्यर्थं । न च "एकयोक्त्या पुष्पवन्तावि"ति कोशात्प्रवृत्तिनिमित्तभेदाभाव शङ्क्य । प्रत्येक पुष्पवानिति न प्रयोक्तव्यमित्येतदर्थत्वेन व्याख्यासुधाया तद्विवरणात् ।

श्रीमत्पुरुषोत्तमप्रणीतो विवेक ।

यलाभ । अनेकार्थस्थले प्रवृत्तिनिमित्तभेदात्सयोगाद्यैर्वृत्तिनियन्त्रणेन सङ्कोचे विवक्षितार्थलाभोऽन्यथा तु सङ्कोचाभावाद्विवक्षितार्थसन्देह एव वृत्तिबल-विचारकैरङ्गीक्रियत इति नैवमुभयलाभ इत्यत आह —**प्रवृत्तीत्यादि** । न च " पुष्प विकसन " इति धातोर्मतुँपि कृते पुष्पवच्छब्दनिष्पत्तेर्विकास-वत्त्वस्य प्रकाशवत्त्वस्य वा प्रवृत्तिनिमित्तत्वान्न तद्भेद इति वाच्यम् । तस्याऽप्या-दावपि तुल्यत्वेन रविचन्द्रवाचकत्वनियमभङ्गापत्ते । अत कुसुमद्वयमेव तादृ-शप्रयोगप्रयोजकत्वेन मृग्यम् । तदपि पद्मकुमुदरूपमेव । पद्मिनीपति कुमुद्वा-

१ एकेति ख ग २ सर्वेनेत्याहुरिति घ ३ नकारोऽयमुभयोरप्युपलब्धयो पुस्त-कयोर्न दृश्यते । तथाप्यपेक्ष्यत इत्यक्षरकुमुप्रमादफल्मेतदित्यनुमाय परिगृहीत । ४ वृत्तिबलाबलविचारकैरिति ख ५ मतुपि कृते इति ख ६ विकाशवत्त्वस्य प्रवृत्ति-निमित्तत्वादिति ख. ७ कमलकुमुदरूपमेवेति क

क्तिपदं "भक्त्याऽहमेकया ग्राह्य" इत्यादिषूभयवाचकमपि ।

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

उभयेति । साधनफलोभयपरमित्यर्थः । उक्तरूपता पुरुषोत्तमैकफलकभ-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

क्वचिदिति । यत्र संयोगाद्यैर्वृत्तेर्न नियन्त्रणं तत्रेत्यर्थः । दर्शयन्तीति । नियन्त्रणेन भक्तिपदस्य विशेषार्थं स्मारयन्त एव दर्शयन्तीत्यर्थः । अत्रोदाह

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

नित्यादिप्रयोगात् । अन्यथा दिवारात्रिविकासिनामनेकेषां पुष्पाणां सत्त्वात्तथाऽपि प्रयोगः स्यात् । अत एव केनचिदुक्तम् "कुसुमं कोशातक्या विकसति रात्रौ दिवा च कूष्माण्ड्याः । यद्यपि तथापि तस्मादुत्कर्षः कुमुदकमलयोरेवे"ति । अतो लोकप्रसिध्द्या [1]पुष्पशब्दस्य रूढिरेवाऽऽदरणीया । तथा सति-सिद्ध एव प्रवृत्तिनिमित्तभेदः । वस्तुतस्तु [2]रवित्वचन्द्रत्वे एव प्रवृत्तिनिमित्ते । न चैकयोक्त्येत्यस्य साधारणवचनेनेत्यर्थाद्रविचन्द्रसमूहस्यैव प्रवृत्तिनिमित्तत्वे प्राप्ते [3]गार्भिणवन्यादिपदवदेकवचनस्याऽपि प्राप्तौ तन्निवृत्त्यर्थं द्विवचनमत्र विधीयत इति न द्वयोस्तथात्वमिति वाच्यम् । साधारणवचनेन पुष्पवत्पदं रविचन्द्रसमूहवाचकं तच्च द्विवचनान्तं प्रयोक्तव्यमि[4]त्येवं वाक्यभेदप्रसङ्गात् । कल्पनागौरवात् । दिवाकरनिशाकरावित्युद्देश्यगतसङ्ख्याया अविवक्षितत्वकल्पनापत्तेश्च । एतेनैव विशिष्टवाचकत्वपक्षोऽपि प्रत्युक्तः । मिथो विशेष्यविशेषणभावे विनिगमनाविरहाच्च । अतस्तत्र प्रवृत्तिनिमित्तभेद एवाङ्गीकार्यः । तथा सति तत्र यथा विशेषविध्यनुपपत्तिबलाद्युगपदुभयप्रतीतिस्तथाऽत्रोभयोः स्नेहश्रवणादिनवकयोर्भगवत्प्रापकत्वसमग्रहानुपपत्तिबलादुभयोर्भक्तिपदवाच्यत्वमेकस्यामेवोक्ताविल्यर्थः । न च तत्र द्विवचनबलादेवोभयप्रतीतिरिति वाच्यम् । तथा सत्ये-

१ पुष्पवच्छब्दस्येति ख. २ रविचन्द्रावेव प्रवृत्तिनिमित्ते इति ख. ३ गार्भिणमित्यादिपदवदिति ख. ४ प्रयोक्तव्यमिति वाक्यभेद प्रसङ्गादिति ख.

उक्तरूपता तु "मामेव नैरपेक्ष्येण भक्तियोगेन विन्दती"त्यादिभिः "एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते । ये चाऽप्यक्षरमव्यक्तमि"ति पार्थप्रश्नेनैतदुत्तरेण च "नाऽलं द्विजत्वमि"त्युपक्रम्य "प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनमि"ति प्रह्लादवाक्येन " न रोधयति मां योग" इत्यादिश्रीमन्मुखोत्थवाक्यैः "भक्त्याऽहमेकया ग्राह्य" इत्यादिवाक्यसहस्रैश्च भक्तावेवधार्यते । मन्त्राधिष्ठातुस्तु पुरुषोत्तमविभूतिरूपत्वं पूर्वमुपपादितमिति

---

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

क्तिरूपता । भक्त्यैव ग्राह्यो न मन्त्रादिभिरिति दर्शयन्ति—मामेवेत्यादिना

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

रणवाक्येषु प्रथमे मामेवेति कर्मवाचकादिपदसान्निध्यात् द्वितीयेऽपि त्वामित्यस्य तदुत्तरेऽपि मय्यावेश्येत्यादेरित्येवं ज्ञेयम् । एतेन पूर्वपक्षे पूजाया यद्भक्तित्वमापादितं स्थितं तत् साधनरूपायां मर्यादाभक्तौ पुरुषोत्तमप्रापकत्वेन विहितायां वा तस्यां पर्यवस्यति न तु पुष्टिभक्ताविति बोधितम् । तेन सिद्धमाहुर्मूले—

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

कयोक्तयेति विशेषविधिवैयर्थ्यापत्तेः । रामानित्यादिवदेकशेषेणैव तत्संभवात् । ननु "दाराः पुंभूम्नी"तिवदिदमेकवचननिवृत्त्यर्थमिति चेत् । सिद्धं तर्हि पुंस्त्वरूपादेर्नोभयप्रतीतिर्विधानं च युगपत्प्रतीत्यर्थमिति । तस्मात्संयोगादिनियमनाभावेऽपि युगपदुभयप्रत्ययेन कोऽपि शङ्कालेशः । यत्र पुनर्नियमनं तत्र त्वन्यतरप्रतीतिरेवेति निश्चयः । एवं भक्तिपदशक्तिं तस्य वाचकत्वप्रकारं च निश्चित्य श्रवणादिपूक्तरूपेण विहितत्वे प्रमाणान्याहुः—उक्तरूपतेत्यादि । उक्तरूपतेति । साक्षात्पुरुषोत्तमप्रापकत्वेन विहितत्वम् । भक्ताविति । पुष्टिमार्गीयश्रवणादिनवके । तथाच तद्विधिषु फलत्वेन भगवतः

---

१ साधनभूतत्वामिति क. २ मर्यादाभक्त इति ख. ३ वा इत्यक्षरं नास्ति क.

तत्प्रापकतज्जपार्चनादेर्न भक्तित्वं वक्तुं शक्यम्। भक्तिसाधनत्वोक्तेश्च। एवं सति भक्तिमार्गीयभजनप्रकारेषु स्नेह एव

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

अवधार्यत इत्यन्तेन। एवमिति। भेदोपपत्तौ सत्यां शीतोष्णादिनिषारणा-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम्।

मन्त्रेत्यादिना। तथाच भक्तिसाधनत्वबोधकवाक्येऽपि भक्तियोगं स लभत इति योगपदान्मर्यादाभक्तिरूपश्रवणादिनिर्वाहं लभत इत्यर्थः। सिध्यतीति साधनभावेन रूपभेदेन भेदादुपासनारूपायां तस्यां न भक्तित्वगन्धोऽपीत्यर्थः। ननु माऽस्तु भक्तित्वमुपासनादिमार्गीयपूजायां तथापि भक्तौ गणिता या पूजा सा तु विध्यधीनैव। हेत्वन्तरस्याऽदर्शनात्। तथा सत्यर्चनविध्युद्देश्यत्वं तु वज्रलेपायितमित्याशङ्कायामाहुः—एवमित्यादि। तद्विवृण्वन्ति—भेदोपपत्तावित्यादिना। उपासनामार्गीयभक्तिमार्गीयपूजयोर्भेदोपपत्तौ सत्याम्।

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः।

स्पर्शो[1] न दोषावहः। स्पर्शे भक्तित्वस्यैव प्रयोजकत्वादित्यर्थः। अत्र प्रथमे वाक्ये भक्तिपदमध्यायारम्भे कर्मकाण्डस्य प्रकृतत्वाद्वाह्यानां तत्तुल्यानां श्रवणादीनामेव वाचकम्। द्वितीयेऽपि भक्तपदस्योपासनसान्निध्याद्विहितश्रवणादिकर्तृवाचकत्वम्। तृतीये श्रवणादीनां मध्ये पठितत्वात्प्रकरणेन तद्वाचकम्। चतुर्थे तु न रोधयतीति सन्दर्भे सत्सङ्गस्तुत्या तस्य च "सत्सङ्गलब्धया भक्त्या मयि मां स उपासिते" ति वाक्ये भक्तिजनकत्वोक्त्या तस्या उपासनसान्निध्यान्नियन्त्रणेन विहितश्रवणादिलाभः। पञ्चमेऽपि तथा ज्ञेयम्। एतद्वैलक्षण्यमुपासनायां स्मारयन्ति—मन्त्रेत्यादि। एतावत्प्रयासेन यत्सिद्धं तदाहुः—एवं सतीत्यादि। स्नेहेन क्रियमाणानां श्रवणादीनां स्नेहम-

१ उपासनामार्गीयपूजयोरिति ख. २ स्पर्शेन दोषावह इत्युपलब्धः पाठः। यथानिवेशन्तु प्रतिभाति ३ बाघ्यानामिति ख. ४ उपासनासान्निध्यादिति ख. ५ विहित श्रवणादिकर्तृवाचकमिति ख. ६ य उपासत इति वाक्ये इति ख.

नियामकः स्नेहवताम्। कर्मणि विधिवत्। तद्रहितानां तु तद्ध-

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

द्युपचारेषु स्नेहवतां तदधीनैव कृतिर्यागे विध्यधीनेव। तद्रहितानामिति। स्नेहरहितानां भजने नियुक्तानां कृतिर्वक्तृपुरुषाधीना। स्नेहस्याऽनुदितत्वान्मर्याद-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम्।

तथाचैकादशे समासौ भगवद्धर्मकथने भगवता "देशान् पुण्यानाश्रयेत मद्भक्तैः साधुभिः श्रितान्। देवासुरमनुष्येषु मद्भक्ताचरितानि च"त्याज्ञापनात्स्नेहार्थं भजन्तं प्रति तेषां स्नेहवता रीतिरुपदेष्टव्या न तु वैधी। तथा सति क्वाऽर्चन-विध्युद्देश्यत्वमित्यर्थः। मर्यादयैवेति। एतेन वेदाविरुद्धपदं व्याख्यातम्। तेन य इदानीन्तनास्तद्विरुद्धमुपदिशन्ति कुर्वन्ति वा ते भ्रान्ता इति सिद्ध्यति। तस्मात्पूर्वेषां रीतिमनुसृत्यैव कार्यम्। अत एव "चन्दनोशीरकर्पूरकुङ्कुमागुरुवासितैः। सलिलैः स्नापयेन्मन्त्रैर्नित्यदा विभवे सति। स्वर्णघर्मानुवाकेन महापुरुषविद्यया। पौरुषेणाऽपि सूक्तेन सामभी राजनादिभिरि"त्यनेनोक्तं स्नापनं ज्येष्ठाभिषेक एव क्रियते। विभवे सत्यपि न नित्यदा। श्रीजगन्नाथे तथैव करणात्। "वस्त्रोपवीताभरणपत्रस्रग्गन्धलेपनैरि"त्यत्रोक्तेनाऽप्युपवीतेन नाऽलङ्क्रियते। व्रजे भगवतोऽनुपनीतत्वात्। "अभ्यङ्गोन्मर्दनादर्शदन्तधावाभिषेचनम्। अन्नाद्यं गीतनृत्यानि पर्वणि स्युरुताऽन्वहमि"त्यत्रोक्तेषु दन्तधावः कदाऽपि न कार्यते। अभ्यङ्गोऽप्यदिनोत्तरम्। शेषा यथासौकर्यमिति युज्यते। एवमन्यदपि बोध्यम्। सर्वत्र श्रीभागवताद्युक्तव्रजस्थाद्याचरणस्यैव मूलत्वा-

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः।

भ्यपातित्वे साक्षात्पुरुषोत्तमप्रापकत्वेन विहितत्वे च सति मुख्ये जघन्ये चाऽधिकारे यथायथं तदुभयं नियामकमित्यर्थः। नन्वेवं सति जघन्याधिकारिकृतश्रवणादेः स्नेहाभावान्न पुष्टिभक्तित्वम्। भक्तिसाधनत्वेनाऽक्रियमाणत्वान्न

१ स्नेहस्याऽनुदितत्वान्न मर्यादयैवोपदेष्टव्य इत्यर्थ इति क. ग. ॥ स्नेहस्याऽदितत्वान्मर्यादयैवोपदेष्टव्य इति घ. २ गीतनृत्यादीनि ख.

स्कृत उपदेश एव । स च वेदाविरुद्ध एवेति ज्ञेयम् । विधिमजानता बालेन पित्रादिशिक्षया कृतसन्ध्यावन्दनादेः कर्मत्ववदुपदेशानुसारेण कृतेरपि भक्तित्वम् । तन्मार्गीयत्वात् । एवम्भूतस्याऽग्रे स्नेहोऽवश्यं भावीति ज्ञेयम् । यथा तादृग्बालकृतकर्मणोऽप्युक्तफलसाधकत्वं तथा तादृग्भजनस्याऽपि पुरुषोत्तमप्रापकत्वमिति किमन्यदवशिष्यते । आधुनिकानामुपदेष्टॄणामपि स्नेहाभावेऽपि तन्मूलभूतानां प्राचामाचार्याणां तद्वत्त्वेन तदनुगृहीतत्वेन सर्वोपपत्तेः । स्वानुगृहीतभक्तप्रवर्त्तितत्वेन यतस्तन्मार्गे पक्षपातो

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

यैर्वोपदेश इत्यर्थः। स्नेहं विनाऽपि संप्रदायप्राप्ततत्कृतेर्भक्तित्वं नाऽन्यथात्वमपीत्य-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

दिति । ननु स्नेहाभावेन कृतायाः पूजायाः कथं भक्तिमार्गीयत्वमित्याशङ्का-

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

मर्यादाभक्तित्वम् । मोक्षार्थित्वाभावान्न प्रावाहिकभक्तित्वम् । भक्तिमार्गीयत्वाच्च नोपासनादिरूपत्वमिति कुत्राऽप्यनिवेश इति तदुपदेशवैयर्थ्यं तत्कृतिवैयर्थ्यं चेत्यत आहुः—**विधिमित्यादि** । तथाच पुष्टिभक्तावेव निवेशान्नोपदेशादेर्वैयर्थ्यमित्यर्थः । ननु तत्र प्रवेशेऽपि कृतिवैयर्थ्याभावो न शक्यवचनः । स्नेहाभावेन भगवत्प्राप्तिरूपस्य फलस्य वक्तुमशक्यत्वादित्यत आहुः—**एवम्भूतस्येत्याद्यवशिष्यत इत्यन्तम्** । तथाच न तत्कृतिवैयर्थ्यमित्यर्थः । ननु तथापीदानीं तदुपदेशवैयर्थ्यं वज्रलेपायितम् । आधुनिकानामुपदेष्टॄणामपि स्नेहाभावात् । तथाच भक्तिमार्गीयत्वमप्यभिमानमात्रमिति तदपि व्यर्थमित्याशङ्कायामाहुः—**आधुनिकेत्यादि । तदनुगृहीतत्वेनेति** । तेषामिति शेषः । पक्षपाते प्रमा-

१ भगवदनुगृहीतत्वेनेत्युपलब्धेषु पुस्तकेषु पाठः । श्रीमत्पुरुषोत्तमचरणव्याख्यानुरोधेन त्वेवम् । एवमेव तत्र तैः प्रतीकस्य ग्रहणात् । २ नान्यत्वमपीत्यर्थे इति ख. ग. घ.

भगवतः। अत एव श्रीभागवते ब्रह्मादिवाक्यम्—"स्वयं समुत्तीर्य सुदुस्तरं द्युमन् भवार्णवं भीममदभ्रसौहृदाः । भवत्पदाम्भोरुहनावमत्र ते निधाय याताः सदनुग्रहो भवानि"ति। अत्र भगवत्पदाम्भोजस्य भक्तिमार्गत्वेन तद्रूपस्वसंप्रदायप्रवर्त्तनमेव तन्निधानम् । तत्प्रवर्त्तितसम्प्रदाये प्रवृत्तानां तादृक्साधनाभावेऽपि साक्षादनुगृहीतेषु पक्षपातेन तत्संबन्धिष्वप्यनुग्रहं करोमीत्यभिप्रायेणोक्तम्—सदनुग्रह इति । सत्सु अनुग्रहो यस्येत्यर्थः । अस्मिन्नर्थे प्रामाण्यार्थं भगवत्संमतिरेव दर्शिता—भवानित्यनेन। तत्सम्प्रदायस्थानां तरणावश्यम्भावाय नौत्वनिरूपणम् । तेनाऽनायासेन भवाब्धितरणं सूचितम् । बाहुभ्यां तरणे ह्यायासो नावा तरणे न तथेत्येतत्सर्वं विवरणे पितृचरणैर्विवृतमिति नाऽत्र लिख्यते । भगवद्भजने परमियं व्यवस्था । अग्निहोत्रादीनां प्रभ्विच्छां ज्ञात्वा यदाऽनुष्ठानं तदा यथाकल्पसूत्रमेव ।

---

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

र्थे कर्म दृष्टान्तीकृत्याऽऽहुः—विधिमजानतेत्यादिना। इयं व्यवस्थेति।

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

यामाहुः—स्नेहं विनेत्यादि । इत्यादिनेति । लिख्यत इत्यन्तेनेत्यर्थः ।

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

णमाहुः—अत एवेत्यादि लिख्यत इत्यन्तम् । नन्वेवं जघन्याधिकारेऽपि चेद्भक्तेः फलपर्यवसायित्वं तदा कर्मणः फलार्थित्वाभावात्तदिच्छाज्ञानेऽपि तत्कृतिवैयर्थ्यात्तत्त्यागापत्त्या तेषु सदाचारोच्छेदप्रसङ्ग इत्यत आहुः—भगवदित्यादि । तथाच ज्ञातायामिच्छायां तदकरणे आभिप्रायिकाज्ञाभङ्गदोषः । यदि च विशेषतो ज्ञानाभावेन सन्देहस्तदा "श्रुतिस्मृती ममैवाऽऽज्ञे यस्ते उल्लङ्घ्य वर्तते । आज्ञाच्छेदी मम द्वेषी मद्भक्तोऽपि न वैष्णव" इति सामान्याज्ञैव तैरनुमन्धेये-

---

१ फलार्थत्वाभावादिति क. २ आभिप्रायिकेति नास्ति । आज्ञाभङ्गदोष इत्येतावन्मात्रमस्ति ख.

एतेनाऽप्रामाणिकत्वेनाऽन्धपरम्परात्वशङ्का निरस्ता। प्रमाणसि-

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी।

संप्रदायप्राप्तमेव कार्यं नाऽप्राप्तं विध्यनुरुद्धमपीत्येवंरूपा। मार्गभेदेन भगवदा-
राधनत्वादग्निहोत्रादीनामप्यन्यथा करणं प्राप्तमपवदन्ति—**अग्निहोत्रादीना-
मिति।** **एतेनेति।** शिष्टाचारस्य प्रमाणत्वादुपदेशात्स्नेहं विनाऽपि प्रामाणिक-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम्।

**इत्येवंरूपेति।** सदनुग्रहपदव्याख्यानसूचिता उक्तरूपा व्यवस्था नियमा-
त्मिका भगवद्भजन एव न तु वैधेऽपि कार्ये इत्यर्थः। तर्हि तादृशस्य वैधे
का व्यवस्थेत्यपेक्षायामाहुः—**मार्गेत्यादि।** तथाच विशेषाज्ञाया अभावात्ता-
दृशस्थले "श्रुतिस्मृती ममैवाऽऽज्ञे यस्ते उल्लङ्घ्य वर्तते। आज्ञाच्छेदी मम द्वेषी
मद्भक्तोऽपि न वैष्णव" इत्याद्याज्ञैवाऽनुसन्धेयेति मूलाशय इति भावः। ननु
भगवद्भजने या व्यवस्थोक्ता तस्या वाचनिकत्वाभावेन प्रयोजकस्य स्नेहस्याऽ-
प्यभावेन तादृशकृतेरन्धपरम्परात्वात्स्नेहरूपफलजनकत्वं दुर्घटमित्यत आहुः—
**एतेनेति।** उक्तवाक्योपन्यासेन। निरासं व्याकुर्वन्ति—**शिष्टेत्यादि।**

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः।

ति न तेष्वाचारोच्छेदप्रसङ्ग इत्यर्थः। ननु तथापि कर्मकरणमेव प्राप्तं न तु
कल्पसूत्रानुरोधोऽपि। यथाकथञ्चित्करणेऽप्याज्ञानिष्पत्तेरित्याशङ्कायामेषाऽनुप्र-
सङ्गादेव निरस्तेत्याहुः—**एतेनेत्यादि।** ननु तापनीयश्रुतौ "तं भजेदि"ति
विधाय "भक्तिरस्य भजनं तदिहाऽमुत्रोपाधिनैराश्येनाऽमुष्मिन्मनःकल्प-
नमि"ति लक्षणदर्शनात्प्रेम्णोऽपि[1] विहितत्वाच्छक्यतावच्छेदकमेकमेव स्वीकार्यं
न द्वयम्। तावताऽनेकार्थत्वदोषस्याऽपि निवृत्तिः। तथा सति स्नेहे भजनप्रकार-

१ एषा तु प्रसङ्गादेवेति ख. २ अपिर्नास्ति ख.

सर्त्तव्यश्रेच्छताऽभयमि"त्यादिवाक्यैर्विधीयत एवेति सर्वमनवद्यमिति दिक् ।

उपास्तिं मन्यन्ते मधुमथनभक्तिं निजकृता-
र्थतां तन्नोपास्यं परमपुरुषं चाऽपि सुविदः ।
द्वयोः सारूप्यात्तद्भ्रमहतिकृते मानसगतं
मुदा भक्तेर्हंसं प्रकटमकरोद्विठ्ठलकृती ॥ १ ॥

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

दिना ज्ञापितः । उपास्तिमिति । सुविदः संप्रदायाभिज्ञा अपि मन्त्रोपासनाया भक्तित्वं तदाचरणमात्रेण कृतकृत्यत्वं परमपुरुषं पुरुषोत्तमं च फलत्वेन मन्यन्त इति सर्वत्राऽन्वेयम् । द्वयोरिति । बाह्यसाधनाचरणस्यैतन्मार्गीयतन्मार्गीययोस्तुल्यत्वाद्भेदकस्य भावस्याऽऽन्तरत्वान्न्यायप्राप्तभ्रमस्य हतिकृते हननाय परस्परसङ्कीर्णस्वरूपस्य क्षीरनीरवद्विवेचनाय सरःस्थानीयमनोगतं भक्तेर्हंसं बहिरुपका-

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

रणीभूतमनोव्यापारस्यैव विधानं न तु प्रेम्ण इत्याशयः । शेषं मूले टीकायां

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

तदेतदाहुः—सर्वमनवद्यमिति । दिगित्यनेन युक्त्यन्तरसत्ता सूच्यते । ताश्च साधनाध्यायतृतीयपादादिभ्योऽवगन्तव्या इति शुभम् । ग्रन्थसमापने प्रतिज्ञापूर्त्तिं हेतुत्वेन सूचयन्तः प्रयोजनमाहुः—उपास्तिमित्यादि । निजकृतार्थतामिति । तथेति शेषः । तन्नेति । उपास्तौ । तथाऽभिमाने हेतुः—द्वयोः सारूप्यादिति । [३]उपास्तिभक्त्योः उपास्यभजनीययोश्च साधर्म्यादि-

[१] न्यायप्राप्तभ्रमहननकृते हननायेति क. ग. [२] परस्परं सङ्कीर्णस्वरूपमिति क. ग.
[३] उपासनाभक्त्योरिति ग.

व्रजामि चरणं मुदा शरणमैहिकामुष्मिके
निरस्तनिजसंशयो य इह भाग्यवद्भिः स्मृतः ।
व्रजेशसुतपादपङ्कजपरागरागाञ्चितं
करोतु सततं स मां निजतनूजवात्सल्यतः ॥ २ ॥

इति श्रीमद्गोपीजनवल्लभचरणैकतानश्रीविट्ठलेश्वरविरचितो
भक्तिहंसः समाप्तः ।

---

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

राय प्रकटितवान् । कृती सफलोद्यमः ॥ १ ॥ व्रजामीति । अहमैहिकामुष्मिके अर्थे मुदा चरणं शरणं यामि । निरस्ता निजेषु स्वविपर्ययेषु संशया यस्य । यश्चरण इह लोके भाग्यवद्भिः कृतपुण्यपुञ्जैः स्मृतो नेतरैः । स चरण इहाऽवसरे

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

त्यर्थः । एवं प्रतिज्ञातं निगमयित्वा प्रथममङ्गलवाक्योक्तं निगमयन्ति—व्रजामीत्यादि । इह भाग्यवद्भिः स्मृतः । यः निरस्तनिजसंशयः निरस्तस्वीयसंशयः । निरस्तस्वस्वरूपविषयकसंशयो वा । तस्येति शेषः । तस्य चरणं मुदा ऐहिकामुष्मिके शरणं व्रजामि । ऐहिकामुष्मिके विषये निरस्तस्वीयसंशय इति वा विश्वासाय[3] । तत्फलं स्वस्मिन् दर्शयन्ति । यः निजतनूजवात्सल्यतः सततं कजपरागरागाञ्चितम् । कजानि पद्मानि तत्परागे यो राग आसक्तिस्तेन अञ्चितं व्याप्तम् । अतिसुखासक्तमित्यर्थः । तादृशं मां व्रजेशसुतपादपम् । व्रजेशसुतो भगवान् । तत्पादरूपो भक्तिमार्ग इति भवत्पदाम्भोरुहनावमित्यत्र सिद्धम् ।

---

१ भक्तितरङ्गिण्यनुरोधी पाठोऽयम् । विवेकस्तु "करोति सततं हि मामि"ति पाठं प्रतिपद्यते । स एव च मूलपुस्तकेषु प्रायशः उपलभ्यते । २ विश्वासाय भाग्यवद्भिः स्मृत इत्यादि ख. ३ विश्वासायेति नास्ति ख. ४ पद्मादीनीति क.

श्रीमद्रघुनाथप्रणीता भक्तितरङ्गिणी ।

व्रजेशसुतचरणकमलरजश्छुरितं मां सर्वदा करोतु । अतिदुर्लभमदेयमपि साङ्गजस्नेहवशेन ददात्वित्यर्थः ॥ २ ॥

यद्रसास्वादरसिकास्तृणीकृतगृहाश्रमाः ।
हसन्ति संसृतिं हंसाः सेयं भक्तितरङ्गिणी ॥ १ ॥

इति श्रीवल्लभनन्दनचरणैकशरणश्रीरघुनाथकृता
भक्तितरङ्गिणी सम्पूर्णा ।

---

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

च प्रकटार्थमिति शुभम् ।

सिद्धे भेदे धर्मभेदादुपास्यभजनीययोः ।
रूपभेदाद्भक्त्युपास्त्योर्भेदः सिध्यति यागवत् ॥ १ ॥
स[1] धर्मफलभेदाभ्यां समुपोद्वलितो भवन्[2] ।
सारूप्यजनितां भ्रान्तिं विदां हन्ति हृदि स्थिताम् ॥ २ ॥
तेन भक्तिपदं गौणमुपास्त्याववधार्यताम् ।
श्रवणादिषु हेतुत्वात्तथा लाक्षणिकं यतः ॥ ३ ॥
स्वतन्त्रफलरूपे हि भक्त्याख्या सेवने स्मृता ।
प्रेम्णा कृतेषु भक्त्याख्या श्रवणादिषु या पुनः ॥ ४ ॥

१ सधर्मत्वादि ख. २ भवन्निति क.

श्रीमत्पुरुषोत्तमप्रणीतं तीर्थम् ।

सा मुख्यकल्पा गङ्गावत् यदा मानार्थता तदा ।
प्रवृत्तिहेतुभेदेन नैव प्रेम्णि विधेयता ॥ ५ ॥
अतः प्रेम्णा कृतं सर्वमवैधमपि तद्बलात् ।
हरिरङ्गीकरोत्येव तेन तन्मार्गगामिनाम् ॥ ६ ॥
उपदेशानुसारेण भजतां स्नेहसम्भवः ।
ततश्च भगवत्प्राप्तिरेप ग्रन्थार्थसङ्ग्रहः ॥ ७ ॥
प्रविश्याऽनेन तीर्थेन निम्नां भक्तितरङ्गिणीम् ।
गाहमानाः प्रपश्यन्तु भक्तिहंसं मुदान्विताः ॥ ८ ॥

इति श्रीमद्वल्लभनन्दनचरणैकतानपीताम्बरात्मजश्रीपुरुषोत्तम-
विरचितं भक्तितरङ्गिण्यास्तीर्थं सम्पूर्णम् ।

---

श्रीमत्पुरुषोत्तमप्रणीतो विवेकः ।

तस्य पं रक्षितारं करोतीत्यर्थः[1] । एवमन्वयेन यतिभङ्गदोषः परिहृतो बोध्यः । यथाश्रुतव्याख्यायां तु वृत्तगन्धिचूर्णिकात्वान्न तत्र यतिविचार इति सर्वमनवद्यम् ।

नमाम्याचार्यचरणान् प्रभून् श्रीविट्ठलेश्वरान् ।
यत्कृपा भक्तिहंसीयविवेकस्फुटतां व्यधात् ॥ १ ॥

इति श्रीमद्वल्लभनन्दनचरणशरणपीताम्बरात्मजश्रीपुरुषोत्तम-
विरचितो भक्तिहंसविवेकः सम्पूर्णः ।

---

[1] करोतीत्यर्थ इति ख.

इतश्च सकृन्निवेश्यताञ्चक्षुः !!!

---

## श्रीसुबोधिनी।

विदितमेवैतत्सफलस्य श्रीमदाचार्य्यचरणपादारविन्दमकरन्दलिहः सुरसंगस्य यत्किल सर्वोद्धारप्रयत्नात्मनो भगवतः श्रीपुरुषोत्तमस्य निदेशात्रिदशशैवलिनीं शिरसा स्वीकृत्य तज्ज्ञानावतारेण श्रीमत्कृष्णद्वैपायनपरमाचार्य्येण श्रीमद्भागवतं नाम सर्वसन्देहनिरासकं किमपि शास्त्रं प्रादुर्भावयाम्बभूव इति। एतच्च भगवदनुग्रहैकसंवेद्यमित्येकान्ततो दुरवबोधमिति भगवद्वदनवैश्वानरैः श्रीमदाचार्य्यचरणैः श्रीसुबोधिनी नाम कापि तद्व्याख्या विरचयाञ्चक्रे। एषा च तत्तद्भगवदभिमतसिद्धान्तोद्भासनभासुरा श्रीश्रीकृष्णपदपाथोजप्रसूमरामन्दमाध्वीकधारासम्पातानुप्रासस्पृहणीयतमा प्रतिमतमत्तमातङ्गावलेपविलोपपारीन्द्रसप्रभा विविधवादोपवनविहारव्यसनिविद्वद्वरेण्यसमर्पितकुतूहला चेति नैतदंशतोऽप्यतिशयोक्तिं स्पृशति। न किल काव्यानामिव साधारण्येषा व्याख्या न वा टीकान्तरानुकारिणी किन्तु विलक्षणतमेति नेह संशयलेशोऽपि। एषा हि भाष्यसब्रह्मचारिणी भाष्यमेव वा श्रीमद्भागवतानुशासनस्य। इयमपि च कलिकुकूलदग्धधियां दुरवबोधा च दुरूहविशेषा चेति परमकारुणिकैः श्रीप्रभुचरणैष्टिप्पण्या श्रीवल्लभगोस्वामिभिर्लेखाभिधेन महता प्रबन्धेन श्रीपुरुषोत्तमपादैः प्रकाशेन श्रीबालकृष्णभट्टैर्योजनया तैस्तैरन्यैः पण्डितप्रकाण्डैस्तत्तद्विप्रकीर्णार्थाधापनपरैः परस्सहस्रैः प्रबन्धैश्च समसेव्यतेत्यहो अनिगम्यगहनार्थानि श्रीमदाचार्य्यचरणवचनानि। एवं च सर्वोऽपि ग्रन्थसमुदयः साम्प्रदायिकानां विद्याव्यासङ्गविपरिलोपाद्विद्यासंरक्षणं एकान्ततो वैमुख्याच्च सम्प्रति सुदुर्लभतमो विलीनप्राय एव वेत्यहो कष्टम्। श्रीसुबोधिन्यपि च तेषु तेषु कतिषुचित्पीठेषु गिरिकाभिर्निगीर्य्यमाणा मत्कुणैर्मालिन्यमुपपाद्यमाना कीटैश्च कवलीक्रियमाणा शीर्णशीर्णरावेष्टनैः कथञ्चिदाच्छादितशरीरा कष्टङ्कष्टमेवाऽ-

तिवाहयति दिवसान् प्रायेण । तमिम सम्प्रदायोपप्लवमालक्ष्य विषण्णै सकलतिलकायिततिलकै श्रीश्रीगोवर्द्धनलालजीमहाराजमहोदयैश्च श्रीश्रीगोकुलनाथगोस्वामिचरणैश्च यथोपलम्भ ग्रन्थमुद्रण प्रतिज्ञातवद्भिरारब्धमिदानीं भट्ट श्रीबलभद्रशर्म्मकविकाव्यरत्नाकरकविचूडामणिशुद्धाद्वैतभूषणकविरत्नसाहाय्येन श्रीसुबोधिनीं सम्मुद्रयितुम् । अनतिचिरादेव च तत्प्रथमस्कन्ध प्रकाश्येत । तत्त्वर्य्यता कृतार्थयितुमात्मान दैवसर्गेणेति भूयो भूयोऽभ्यर्थयामहे । इति शम् ।

## षोडश ग्रन्थाः ।

### यथोपलब्धनिखिलव्याख्याभिरपेता ।

यथा किल स्वानुभावप्रकटनहृदयस्य भगवत श्रीपुरुषोत्तमस्याऽऽज्ञया तदीयवदनवैश्वानरै श्रीमद्वल्लभाचार्य्यचरणै श्रीसुबोधिनी च सूक्ष्मटीका च मीमांसाद्वयभाष्यञ्च तत्त्वार्थदीपश्च तत्प्रकाशश्चेति सकलसच्छास्त्रसमन्वयविहारभूमयो निगूढाशयग्रन्थिसमुद्भ्रथनानुग्रहैकविग्रहा निगमागमामृतानि स्यन्दपरिस्पन्दिनस्ते ते प्रौढतमा प्रबन्धा प्राणायिषत तथैव सर्वात्मना ग्रहणधारणसौकर्य्याभिवाञ्छया प्रकरणान्यपि तानि तानि भूयांस्येव समुपन्यबन्धिषतेति विदितमेतत्साम्प्रदायिकानाम् । एषु च पत्रावलम्बनादिषु भूरिसङ्ख्येष्वपि यमुनाष्टकप्रभृतय सेवाफलान्ता प्रबन्धा सङ्ख्यया षोडशेति षोडश ग्रन्था इति व्यवह्रियन्ते । विच्छिद्य व्यवहार पुनरयमेतत्प्रयोजनाय यत्किल षोडशानामेषामध्ययनावधानाभ्यां यथानुक्रममावश्यकसकलसाधनाववोध सुलभः । ततश्च सर्गवर्गादिसज्ञाविभेद इव प्रतिनियतसज्ञाविभेदेऽपि नैयमाकस्मिकी समुदायसज्ञा । एवञ्च समुदितानामेकमेव महावाक्यत्व प्रत्येकमवान्तरवाक्यत्वञ्चेति स्फुटमेतत् । अत्र च सङ्क्षिप्य कारिकामना तत्तदर्थनिष्कर्षप्रतिपादनेन च साधनानुक्रमेण च निरतिशयमेव सौकर्य्यं ग्रहणधारणाभीप्सूनाम् । अत एव चाऽमीषु महानादर साम्प्रदायिकानाम् । एवमपि नाऽल्पधिषणैराधुनिकै शक्यमवबोद्धुमेषा यथावत्तात्पर्य्यमिति श्रीमत्प्रभुचरणप्रभृतिभिस्तैस्तै परमकारुणिकैर्विनिर्मिता अत्राऽनेका व्याख्या । एताश्च कस्मिन् प्रकरणे विषय

इति सुदुष्करमेतत्सङ्ग्रहीतुम् । अध्ययनाध्यापनसङ्ग्रहसंरक्षणव्यसनविलोपेन यत्नशतेऽपि दुःशका अशेषतोऽधिगन्तुममूरिदानीमिति । यावतीश्चेमा अध्यगमाम ता अपि न किल नाऽतिदुर्लभा. । बह्वय एव किलैतास्वपूर्वा व्याख्या इति । उपलभ्यमाना अपि च क्वचिदेव शक्यन्तेऽवलोकितुमिति तदधिगमेऽपि महानेवाऽन्वभावि प्रयासोऽस्माभिः । तथा सति कथमिवैताः सर्वेऽप्युपलभन्तां साम्प्रदायिका अधिगच्छन्तु च श्रीमदाचार्य्यचरणवाक्पीयूषास्वादम् । संरक्षणमपि च तथा सति सुदुष्करमासाम् । तत्किल प्राप्तः सोय सम्प्रदायविप्लव इति हा धिक् कष्टम् । अवश्यमेव चाऽत्र प्रतिविधातव्यमस्माभिः साम्प्रदायिकैरिति क्रमशः सम्मुद्र्य प्रकाशनीया एताः । एतदेव किलाऽभिप्रेत्य नातिचिरेण व्यवसितमस्माभिस्ता एताः प्रकटयितुम् । अत्र च प्रथमतो व्याख्यात्रितयानुगतं यमुनाष्टकं प्रकाश्येत । ततश्च यथाक्रममपरे प्रबन्धाः । ततश्च निवेद्यतामात्मनो नाम चाऽधिष्ठानञ्च नातिविलम्बेन शुद्धाद्वैतसिद्धान्तकार्य्यालयाय स्वमार्गसेवाप्रेप्सुभिर्महाभागैरिति शम् ।

## सेवाकौमुदी ।

प्रबन्धोऽयं भुवनविदितवैदुष्यावदानैः समस्तसाम्प्रदायिकप्रवरैर्दीक्षितश्रीछाद्मभट्टापरनामधेयैः श्रीमद्बालकृष्णभट्टैः प्रणीतः । अत्र च पुष्टिमार्गीया सेवा किम्प्रमाणमूलिकेति जिज्ञासाया निखिलप्रमाणमूर्धन्यभूतश्रीमद्भागवतमूलिकेति सम्यगुपपादितम् । अयञ्च प्रणष्टप्राय एवाऽस्माभिरुपलब्धः । समुत्कृष्टतमश्चाऽय यत्किल प्रतिपाद्यस्याऽस्याऽनबोधेऽशतोऽपि नाऽऽयासो भवतीति । न च परिशीलितेऽस्मिन्नवशिष्यते सेवाविषये किमप्यवबोद्धुम् । तदेष भगवदानुकूल्येन कथञ्चन करतलमस्माकमुपनतो मा भूदुपेक्षितः सर्वथैव प्रणष्ट इति विस्पष्टैर्वर्णैः सम्मुद्र्य प्रकाशितः । सङ्गृह्णतामेष सर्वथाऽप्यनधिगतसाम्प्रदायिकमेवासरणिरहस्यैर्भगवदीयैरिति सानुरोधमेतद्विज्ञाप्यतेऽस्माभिः । निवेद्यतां प्रेप्सा कार्य्यालयायेति शम् ।

## सिद्धान्तसिद्धापगा ।

कृतिरियं सकलसस्कृतरसज्ञाना बहुमानभाजनस्य भट्टश्रीबलभद्रशर्म्मके- विकाव्यरत्नाकरकविचूडामणिशुद्धाद्वैतभूषणकविरत्नस्य । शुद्धो ब्रह्मवादश्चाऽस्या विषयो य किल शुद्धाद्वैतवेदान्त इति प्रसिद्ध्यतितमामा महाम्भोनिधे । श्रीमदाचार्य्यचरणानामप्रतिहतमखिलहेयप्रत्यनीक निरस्तसाम्यातिशय कमप्य- लौकिक महिमानमालोक्य कस्यचिदीर्ष्याम्यसूयामुल्भेन प्रद्वेषदावानलेनाऽऽ- मूलचूड प्रज्वलितस्याऽनन्ताचार्य्यनाम्नो रामानुजस्य निप्रतिषिद्धविप्रलपितम- हापातकानि परिमार्ष्टुमेवेयमवतीर्णा । अस्याञ्च ब्रह्मण साक्षादेव प्रपञ्चात्मना परिणामेऽपि न निकारापत्तिरित्येतदेव विशिष्य प्रपञ्चितम् । तदौपयिकमिति प्रत्यर्थिविप्रतिपत्तिस्थानञ्चेति विरुद्धसर्वधर्माश्रयत्वमपि ब्रह्मण सप्रपञ्चमुपपा- दितम् । निरस्ताश्च तथा सर्वा अपि विप्रतिपत्तयो यथा नैव पुनरेता उद्भवे- युरशतोऽपि वैदुष्ये प्रतिवादिन । स्फुटीकृतञ्च शुद्धाद्वैतसिद्धान्तस्यैव सर्वात्मना निगमागमगोष्ठीगीयमानत्व नेतरस्येति । विस्पष्टितञ्च लोकोत्तरत्व कालत्रितये- ऽप्यसम्भावितामिभवभय वर्धतस्य । प्रदर्शितञ्च प्रत्यर्थिन स्वमतेऽपि परम- मज्ञानमिति मतान्तरेऽधिक्षेप प्रद्वेषमात्रविजृम्भितमेवेति । परीक्षितञ्च विशि- ष्टाद्वैतसिद्धान्तस्याऽपि प्रसङ्गतो मर्म येनाऽवबुद्ध्येत तेन सिद्धान्ताधिक्षेपस्तद- नुवर्त्तिन कीदृग्विधामनुभावयति वेदनामिति । किम्बहुना । तथा विल्लाऽत्रो- पपादित शुद्धाद्वैतसिद्धान्तो यथा सर्वथाऽपि विस्मरेदेव पुनरयमेवंविधमाच- रितुमतिचारम् । एवमपि न खलु नेयमुपकुर्य्याज्जिज्ञासून् । एतानपि सम्यगे- वाऽवबोधयेदिय सिद्धान्त यथा घटेत क्रियाया एकस्या अर्धद्वयजनकत्वम् । भाषा पुनरस्या मधुरतरा च सरला च सुकुमारपदविन्यासमनोहरा च । यया किल तदेकप्रवणतामेवोपयाति हृदयमनुवाचयितु । सम्मतयश्चाऽनया वह्वय एवाऽधिगतास्तेषां तेषा विद्वच्छिखामणीनाम् । निर्मञ्छन पुनरेतस्या ॥) अष्टा- णकाः । प्रापणाव्ययश्च न पृथक् । प्रेप्सुभि प्रेष्यतां कार्य्यालयाय पत्रम् ।

## सद्धर्मस्य वर्षद्वितयम् ।

विदितमेतत्संस्कृतसरस्वतीसमाराधनतत्पराणां पण्डितप्रवराणां यत्किल कतिपयेभ्यो वर्षेभ्यः पुरा प्रसिद्धतमैः श्रीमद्वामनाचार्य्यशब्दवारिधिमहामहोपदेशकैर्मथुरातः सद्धर्मो नाम संस्कृतमासिकपत्रं प्राकाश्यतेति । एतच्च मुहुर्मुहुस्तैस्तैरन्तरायैः प्रतिहतोत्साहमपि यावद्वर्षद्वितयं सर्वात्मनाऽपि पर्य्यचरद्भगवतीं गैर्वाणीं वाणीम् । अन्ततः पुनस्तैस्तैः प्रबलतमैः प्रतिबन्धैर्नैवेदमशकदात्मानं स्थिरयितुमिति प्रतिबद्धम् । अनेकशः किल प्रयतितमेतेन भूयोऽप्यात्मानं प्रकाशयितुम् । किन्तु सर्वतोऽपि विप्रतिपन्नमेव दैवं साधुकृत्येष्विति वैकल्यमेवाऽशिश्रियदस्य प्रयासः । ततश्च कैश्चिदुदासितमेकैरनुतप्तमन्यैर्निर्विण्णमितरैर्मुकुलितमपरैश्चोदाहृतमब्रह्मण्यमित्यहो ग्राहकाणामस्मिन्नतिशायी प्रणयः । प्रकाशकाः पुनः किमत्र प्रतिविधीयतां नियतिमात्राधीने विषय इति कथमपि शोकविवशमवस्थापयन्ति स्म हृदयम् । एवमपि न खल्वेते भूयोऽपि नैनदिच्छन्ति प्रकाशयितुम् । आनुकूल्यं पुनरपेक्ष्यते दैवस्य । तदिदं यदा घटेत तदा ननु प्रकाश्येतैवैतत् । एतावत्पुनरिदानीं प्रार्थनीयं यत्किल वियत एवाऽस्मत्सन्निधे श्रीमतां निरुपधिप्रेमपात्रस्य सद्धर्मस्य वर्षद्वितयं येन शक्येत कथमपि विनोद्यमानेन मनसा शोकप्रसरो लघूकर्त्तुं श्रीमद्भिः । अत्र हि विशदावदातपदविन्यासमयी च मधुरतरसरलसुकुमारसङ्ग्रथनसुभगा च संस्कृतभाषा गहनतमानामपि विषयाणां सुबोधया सरण्या सविस्तरमुपवर्णनं तत्तदावश्यकविषयसन्निवेशश्चेति समुदिता विनोदसामग्री । वर्षद्वितयेऽत्र मृद्वीकासवप्रतिस्पर्धीनि मङ्गलमासावतरणिकाखण्डकाव्यानि वेदवेदाङ्गस्मृतिदर्शनपुराणेतिहाससाहित्यादीनां मनोहरतरः प्रामाण्यप्रमेयादिविचारो वर्णव्यवस्था नीतिवल्लरी विधवोद्वाहखण्डनमन्येऽपि चैवंविधाः केऽपि विषयाः प्रकाशमन्वविन्दन्त । ये च नांशतोऽपि परिचिन्वते संस्कृतभाषां तत्कृते हिन्दीभाषयाऽपि सङ्क्षेपत उपनिबद्धा एतेऽत्र विषयाः । तदेवमविदुषामपि सुलभ एतेन मनसो विनोदः । सोऽपि च निरतिशयमुपकुर्वीत न

क्षणमेकमतिवाह्य निवर्त्तेतेत्यवश्यमिदं सङ्गृह्यतां धीमद्भिः । मूल्यञ्च २ ) रूपकद्वितयमित्यतिस्वल्पम् । प्रापणव्ययश्च न पृथक् । सौकर्य्यातिशयेऽप्येवं यदि न सङ्ग्रहीतुमुत्सुञ्जीरन्महाभागास्तर्हि हतस्तपस्वी संस्कृतानुराग इत्यलमतिप्रसङ्गेन ।

शुद्धाद्वैतसिद्धान्तकार्य्यालयः,
बडा मन्दिर, भूलेश्वर,
बम्बई.

विनयवशंवदो—
भट्टश्रीवल्लभद्रशर्म्मा,
क. का. क. शु कं.

